# मनुस्मृतिः

## ( द्वितीयोऽध्यायः )

संस्कर्त्ता

जनार्दन शास्त्री पाण्डेय

मोतीलाल बनारसीदास

दिल्ली :: वाराणसी :: पटना :: मद्रास

॥ श्रीः ॥

# मनुस्मृतिः

## [ द्वितीयोऽध्यायः ]


संस्कर्त्ता

**जनार्दनशास्त्री पाण्डेयः**

साहित्याचार्यः, एम. ए.



**मोतीलाल बनारसीदास**

**दिल्ली :: पटना :: वाराणसी :: मद्रास**

कार्यालय : बंगलो रोड, जवाहर नगर, दिल्ली १५० ००७
शाखायें : ● चौक, वाराणसी–२२१ ००१ ( उ० प्र० )
● अशोक राजपथ, पटना–८६४ ००४ ( बिहार )
● ६ अपरस्वामी कोइल स्ट्रीट मैलापुर–६०० ००४ ( मद्रास )

तृतीय संस्करण, वाराणसी १९८४

मूल्य रु० ५.००

नरेन्द्र प्रकाश जैन, मोतीलाल बनारसीदास, चौक, वाराणसी द्वारा प्रकाशित एवं गौरीशंकर प्रेस, मध्यमेश्वर, वाराणसी द्वारा मुद्रित

# विषय-सूची

—०—

॥ श्रीः ॥

# मनुस्मृतिः

## व्याख्यानुवादसंवलिता

---

## द्वितीयोऽध्यायः

धर्म का सामान्य स्वरूप—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ १ ॥

**अन्वय**—अद्वेषरागिभिः सद्भिः विद्वद्भिः नित्यं सेवितः हृदयेन अभ्यनुज्ञातः यः धर्मः तं निबोधत ।

**व्याख्या**—[द्वेषश्च रागश्च द्वेषरागौ, न विद्येते द्वेषरागौ येषु ते अद्वेषरागिणः तैः] अद्वेषरागिभिः=रागद्वेषरहितैः, सद्भिः=सज्जनैः, विद्वद्भिः=वेदविद्भिः, नित्यं=सततं, सेवितः=अनुष्ठितः, हृदयेन=अन्तःकरणेन, अभ्यनुज्ञातः=निश्चितः, यः धर्मः=वेदविहितानुष्ठानं तं निबोधत=अवगच्छत ।

**अर्थ**—रागद्वेषरहित, सज्जन और विद्वान् पुरुषों के द्वारा सतत सेवित तथा उनके द्वारा शुद्ध अन्तःकरण से निश्चित धर्म को आप लोग सुनें ॥१॥

वेदविहित कर्म की काम्यता—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ २ ॥

**अन्वय**—इह कामात्मता न प्रशस्ता, अकामता चैव न अस्ति, हि वेदाधिगमः, वैदिकः कर्मयोगश्च काम्यः ।

**व्याख्या**—इह=अस्मिन् लोके, [कामात्मनो भावः] कामात्मता=कामबुद्धित्वं न प्रशस्ता=नोचिता, किञ्च [ कामः=फलाभिलाषः, न कामः अकामः तस्य भावः ] अकामता=कामराहित्यमपि, न अस्ति=न विद्यते,

फलाभिलाषं विना प्रवृत्ते रभावात्, हि=अतः (वेदस्य अधिगमः) वेदाधिगमः=वेदज्ञानं, वैदिकः=वेदविहितः, कर्मयोगः ( कर्मणो योगः कर्मयोगः )=कर्मानुष्ठानं, च काम्यः = फलाभिलाषप्रवृत्तियोग्यः ।

अर्थ—इस लोक में फल की अभिलाषा से किसी कार्य में प्रवृत्त होना उचित नहीं, किन्तु बिना फल की अभिलाषा से किसी कार्य में प्रवृत्ति भी नहीं देखी जाती, अतः वेदज्ञान तथा वेदविहित कर्मानुष्ठान में ही अभिलाषा से प्रवृत्त होना चाहिए ॥ २ ॥

### व्रतोंकी संकल्पमूलकता—

सङ्कल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः ।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥ ३ ॥

अन्वय—कामः सङ्कल्पमूलः, यज्ञाः सङ्कल्पसंभवाः, किञ्च व्रतानि सर्वे-यमधर्माश्च सङ्कल्पजाः स्मृताः ।

व्याख्या—कामः=फलाभिलाषः, ( सङ्कल्पः मूलो यस्य सः ) सङ्कल्पमूलः =सङ्कल्पजन्यः, यज्ञाः = अग्निष्टोमादयः, ( सङ्कल्पेन सम्भवन्तीति ) सङ्कल्पसंभवाः=सङ्कल्पजाः, व्रतानि=नियमा ( यमाश्च धर्माश्चेति ) यम-धर्माः=ब्रह्मचर्यादि शिष्टाचाराश्च, ( सङ्कल्पेन जायन्ते इति ) संकल्पजाः=सङ्कल्पोत्पन्नाः स्मृताः=कथिताः ।

अर्थ—काम संकल्प से उत्पन्न होता है, यज्ञ, व्रत, यम नियम तथा धर्म में प्रवृत्ति का मुख्य कारण भी सङ्कल्प ही है क्यों कि मानसिक इच्छा (सङ्कल्प ) के बिना किसी भी कर्म-धर्म में प्रवृत्ति नहीं देखी जाती ॥ ३ ॥

### क्रिया की कामसापेक्षता—

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ॥ ४ ॥

अन्वय—इह अकामस्य काचित् क्रिया कर्हिचित् न दृश्यते हि यत् यत् किञ्चित् कुरुते तत् तत् ( सर्वं ) कामस्य चेष्टितम् ।

अन्वय—इह=लोके, अकामस्य=कामरहितस्य, काचित् क्रिया=भोजनादिप्रवृत्तिरूपा, कर्हिचित्=कदाचित् (अपि ), न दृश्यते=नावलोक्यते, हि=अतः ( पुरुषः ) यत् यत् किञ्चित्=स्वल्पं अधिकं वा कुरुते-तत् तत् सर्वं कामस्य=फलाभिलाषस्य, चेष्टितम्=व्यवसितम् ।

**अर्थ**—इस लोक में प्रायः देखा जाता है कि कोई भी पुरुष बिना इच्छा के किसी कार्य में प्रवृत्त नहीं होता । अतः किसी भी कार्य के विषय में पुरुष की प्रवृत्ति इच्छा के अधीन है ॥ ४ ॥

**तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।**
**यथासङ्कल्पितांश्चेह सर्वान्कामान् समश्नुते ॥ ५ ॥**

**अन्वय**—तेषु सम्यग् वर्त्तमानः अमरलोकतां गच्छति, इह यथासङ्कल्पितान् सर्वान् कामान् समश्नुते च ।

**व्याख्या**—तेषु=वेदाध्ययनकर्मसु, च सम्यग् वर्त्तमानः=आस्तिकबुद्ध्या अनुतिष्ठन्, [ अमराणां लोकः अमरलोकः, तस्य भावस्तत्ता, तां ] अमरलोकतां=स्वर्गलोकत्वं, गच्छति=प्राप्नोति, किञ्च इह=अस्मिन् लोके, [ सङ्कल्पितानानतिक्रम्य ] यथासङ्कल्पितान्=सङ्कल्पानुरूपान्, कामान्=विषयान्, च, समश्नुते=प्राप्नोति ।

**अर्थ**—वेदाध्ययन तथा भेदप्रतिपादित कर्म आस्तिक बुद्धि से करनेवाला पुरुष स्वर्गादि उत्तम लोकों को प्राप्त करता है और इस लोक में भी वह अपनी इच्छा के अनुसार विषयों को यथेष्ट भोगता है ॥ ५ ॥

[ असद्वृत्तस्तु कामेषु कामोपहतचेतनः ।
नरकं समवाप्नोति तत्फलं न समश्नुते ॥ १ ॥
तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम् ।
काम्यं कर्मेह भवति श्रेयसे न विपर्ययः ॥ २ ॥ ]

[ यदि तृष्णा से नष्ट बुद्धिवाला व्यक्ति अभीष्ट विषयों के लिये यथोक्त आचरण करता है तो वह नरक जाता है और उसे अभीष्ट फल नहीं मिलता ।१। इसलिये श्रुति और स्मृति से कहे गये काम्य कर्मों को विधिपूर्वक करने से ही कल्याण होता है अन्यथा नहीं ॥ २ ॥ ]

धर्म के मूल—

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ६ ॥**

**अन्वय**—अखिलः वेदः, तद्विदां स्मृतिशीले च, साधूनाम् आचारः चैव, आत्मनः तुष्टिः एव च धर्ममूलम् ।

व्याख्या--अखिलः=सम्पूर्णः, वेदः-ऋग्वेदादयः सारण्यकोपनिषदः, [तान् विदन्तीति तद्विदस्तेषां ] तद्विदां=वेदज्ञानां, मन्वादीनां [ स्मृतिश्च शीलं च ] स्मृतिशीले=स्मृत्यनुष्ठाने, साधूनां=रागद्वेषरहितानां, आचारः =आचरणं चैव, आत्मनः=स्वस्य, तुष्टिः=सन्तोषः एव च [ धर्मस्य मूलं ] धर्ममूलं= धर्मप्रमाणम् ।

अर्थ--सम्पूर्ण वेद तथा वेदज्ञों की स्मृतियाँ एवं स्वभाव, सज्जनों के आचरण तथा अपने आत्मा की सन्तुष्टि ये सभी धर्म के मूल स्रोत हैं ॥ ६ ॥

### धर्म की वेदमूलकता—

य: कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ ७ ॥

अन्वय--मनुना कस्यचित् यः कश्चिद् धर्मः उक्तः स सर्वः ( अपि ) वेदे अभिहितः हि सः सर्वज्ञानमयः ।

व्याख्या--मनुना=तन्नामकेन ऋषिणा, कस्यचित्=ब्राह्मणादेः, यः कश्चिद् अपि धर्मः, उक्तः=कथितः, स सर्वः ( अपि ) वेदे=सारण्यकोपनिषदि मन्त्र-संहितायां अभिहितः=कथितः, हि=यतः, सः=मनुः, सर्वज्ञानमयः=सर्व-ज्ञानस्वरूपः ।

अर्थ--मनु ने जिसका जो भी धर्म अपनी स्मृति में कहा है वह सब वेद प्रतिपादित ही है, क्योंकि मनु सम्पूर्ण ज्ञान के स्वरूप हैं उनको वेदों का सभी तात्पर्य अवगत था ॥ ७ ॥

### कर्तव्य धर्म का निर्णय—

सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥ ८ ॥

अन्वय--विद्वान् इदं सर्वं निखिलं (अपि) ज्ञानचक्षुषा समवेक्ष्य (कृतवान्) अतः ( सर्वः ) श्रुतिप्रामाण्यतः वै स्वधर्मे निविशेत ।

व्याख्या--विद्वान्=धार्मिका, इदं सर्वं निखिलं=धर्माचरणं, [ ज्ञानमे चक्षुः ज्ञानचक्षुस्तेन ] ज्ञानचक्षुषा=ज्ञानदृष्टया, समवेक्ष्य=दृट्ष्वा, कृतवानि शेषः अतः अपि [श्रुतेः प्रामाण्यं श्रुतिप्रामाण्यं, तस्मात्] श्रुतिप्रामाण्यतःवेदज त्वात्, अस्मिन् स्वधर्मे=स्वस्ववर्णाश्रमादिव्यवहारे निविशेत=स्थितिं कुर्या

**अर्थ**—भगवान् मनुने वेद के सम्पूर्ण अर्थ को ज्ञानदृष्टि से देखकर इस धर्म का प्रणयन किया है, अतः वेदप्रतिपादित होने के कारण सभी पुरुषों को अपने-अपने वर्णधर्मानुसार इसमें प्रवृत्त होना चाहिये ।

धर्मानुष्ठानका फल—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ९ ॥

**अन्वय**—हि मानवः श्रुतिस्मृत्युदितं धर्मम् अनुतिष्ठन् इह कीर्तिम् अवाप्नोति, प्रेत्य अनुत्तमं सुखं च ( प्राप्नोति ) ।

**व्याख्या**—हि=यतः,[ मनोरपत्यं] मानवः=मनुजः, [ श्रुतिश्च स्मृतिश्च श्रुतिस्मृती, ताभ्यां उदितं] श्रुतिस्मृत्युदितं=श्रुतिपुराणोक्तं, धर्मम्,अनुतिष्ठन्=आचरन् इह=लोके कीर्तिं=यशः, प्राप्नोति प्रेत्य=शरीरत्यागानन्तरं, अनुत्तमं=सर्वश्रेष्ठं, सुखं=ब्रह्मानन्दं च प्राप्नोति ।

**अर्थ**—वेद तथा स्मृतियों में कहे गये धर्म का आचरण करने से मनुष्य इस लोक में यश प्राप्त करता है तथा मरने के उपरान्त सर्वश्रेष्ठ सुख को प्राप्त करता है ॥ ९ ॥

श्रुति-स्मृतिका परिचय—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ १० ॥

**अन्वय**—श्रुतिः वेदः विज्ञेयः, धर्मशास्त्रं स्मृतिः वै विज्ञेयम्, ते सर्वार्थेषु अमीमांस्ये, हि धर्मः ताभ्यां निर्बभौ ।

**व्याख्या**—[श्रूयते इति] श्रुतिः वेदः विज्ञेयः=ज्ञातव्यः, धर्मशास्त्रं तु वै स्मृतिः (विज्ञेयम्), ते=श्रुतिस्मृती, सर्वार्थेषु-सकलप्रयोजनेषु, [ मीमांसितुं योग्ये मीमांस्ये, न मीमांस्ये ] अमीमांस्ये=प्रतिकूलतर्काविचार्ये, हि=यतः, ताभ्यां=श्रुतिस्मृतीभ्यां, धर्मः=वर्णाश्रमादिरूपः, निर्बभौ=निर्गतः ।

**अर्थ**—केवल सुने जाने के कारण श्रुतियाँ ही वेद है तथा स्मृतियाँ वेद के पूर्वापर तात्पर्य को निर्धारण कर लिये जाने के ही कारण धर्मशास्त्र है । श्रुति और स्मृतियों का खण्डन कभी भी प्रतिकूल तर्क से नहीं करना चाहिये, क्योंकि धर्म श्रुति तथा स्मृतियों से निकला हुआ है ॥ १० ॥

## नास्तिक की निन्दा—

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ११ ॥

**अन्वय**—यः द्विजः हेतुशास्त्राश्रयात् ते मूले अवमन्येत स वेदनिन्दकः नास्तिकः ( अतः ) साधुभिः बहिष्कार्यः ।

व्याख्या—यः द्विजः=ब्राह्मणादिः [हेतोः शास्त्रं, तस्य आश्रयः, तस्मात् ] हेतुशास्त्राश्रयात्, =तर्काश्रयात् ते मूले=श्रुतिस्मृतिरूपे, अवमन्येत=अपमानं कुर्यात्, स [ वेदस्य निन्दकः वेदनिन्दकः=वेदनिन्दाकारकः, [ न परलोकादौ मतिर्यस्य स ] नास्तिकः=धर्मविश्वासशून्यः, अतः साधुभिः=शिष्टैः बहिष्कार्यः=निःसार्यः ।

**अर्थ**—जो ब्राह्मण कुतर्कका आश्रय लेकर धर्म के हेतुभूत उन श्रुतियों तथा स्मृतियों का खण्डन करता है वह वेदनिन्दक तथा नास्तिक है । शिष्टों को चाहिये कि उससे किसी प्रकार का व्यवहार न करें ॥ ११ ॥

## धर्म के चार प्रकार—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥१२॥

**अन्वय**—वेदः स्मृतिः सदाचारः स्वस्य आत्मनः प्रियं च एतत् चतुर्विधं साक्षात् धर्मस्य लक्षणं प्राहुः ।

**व्याख्या**—वेदः=ऋगादि श्रुतिः, [ स्मर्यते इति ] स्मृतिः=मन्वादिः, [ सतामाचारः] सदाचारः=शिष्टाचरणं, स्वस्य आत्मनः प्रियम्=तुष्टिकरम्, च एतत् चतुर्विधं=चतुःप्रकारकं, साक्षात्=प्रत्यक्षम्, धर्मस्य लक्षणं प्राहुः=कथयन्ति, बुधाः इति शेषः ।

**अर्थ**—वेद, स्मृति, सज्जनों के आचरण तथा अपने आत्माको जिससे सन्तोष हो, ये चार धर्म के साक्षात् लक्षण हैं ॥ १२ ॥

'[ स्वस्य च प्रियमात्मनः—जिससे अपने आत्माको सन्तोष हो' इसका अर्थ यह नहीं है कि जो अपने को अच्छा लगे वही धर्म है । इसका तात्पर्य है कि जहाँ पर श्रुति दो परस्पर विरुद्ध आदेश करे अथवा श्रुतिका आदेश भिन्न हो और स्मृति या सदाचार उससे विरुद्ध हों, उस दशामें उन दोनों में से देश-काल

आदि के अनुसार जिससे अपने (आत्मा) को सन्तोष हो वह करे। वह भी धर्म का प्रकार है, इसी को आगे स्पष्ट किया गया है। ]

श्रुति का परम प्रामाण्य—

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ १३ ॥

अन्वय—अर्थकामेष्वसक्तानां धर्मशास्त्रं विधीयते, (किञ्च) धर्मं जिज्ञासमानानां श्रुतिः परमं प्रमाणम् ।

व्याख्या—[अर्थाश्च कामाश्चेत्यर्थकामाः, तेषु असक्ताः, तेषां] धर्मकामेष्वसक्तानां=अर्थकामेष्वलिप्तानां (जनानां कृते) [धर्मस्य ज्ञानं] धर्मज्ञानं=धर्मोपदेशः, विधीयते किञ्च धर्मं [ज्ञातुमिच्छन्ति इति जिज्ञासमानाः, तेषाम् ] जिज्ञासमानानां=ज्ञातुमिच्छताम् (जनानां कृते) श्रुतिः=वेदः, परमं सर्वाधिकं प्रमाणम् ।

अर्थ—जिन लोगों की आसक्ति अर्थ तथा काम में नहीं है उन्हीं लोगों के लिये हम यह धर्मोपदेश करते हैं तथा धर्म की जिज्ञासा रखनेवाले मनुष्यों के लिये वेद ही सर्वाधिक प्रमाण है ॥ १३ ॥

श्रुतिद्वय-विरोध में दोनों की ग्राह्यता—

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ १४ ॥

अन्वय—यत्र श्रुतिद्वैधं स्यात् तत्र उभौ अपि धर्मौ स्मृतौ (यतः) मनीषिभिः तौ उभौ अपि धर्मौ सम्यगुक्तौ ।

व्याख्या—यत्र=स्थले [श्रुतेर्द्वैधं] श्रुतिद्वैधं=परस्परविरुद्धं श्रुतिवचनं, स्यात् तत्र उभौ अपि धर्मौ, स्मृतौ=ज्ञातव्यौ, यतः मनीषिभिः=विद्वद्भिः, तौ उभौ अपि=श्रुत्युक्तौ, धर्मौ सम्यग्=सुष्ठु, उक्तौ=कथितौ ।

अर्थ—जहाँ श्रुतियों में परस्पर विरोध हो वहाँ दोनों ही धर्मों को प्रमाण मानना चाहिए, क्यों कि विद्वानों ने उनपरस्पर विरुद्ध दोनों ही वचनों को ठीक माना है ॥ १४ ॥

उदाहरण—

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥ १५ ॥

**अन्वय**--उदिते (एव) अनुदिते एव च तथा समयाध्युषिते एव इति वैदिकी श्रुतिः यज्ञे सर्वथा वर्तते ।

**व्याख्या**--(उदिते जुहुयात् अनुदिते जुहुयात् समयाध्युषिते जुहुयात् इति त्रिषु परस्परविरुद्धश्रुतिस्थलेषु), उदिते = सूर्योदये (एव जुहुयात्) [न उदिते] अनुदिते = सूर्योदयात्प्रथमे (काले जुहुयात्) तथा समयाध्युषिते = मध्याह्ने एव जुहुयात् = अग्निहोत्रं कुर्वीत इति त्रिधा विरुद्धापि वैदिकी श्रुतिः सर्वथा यज्ञे यज्ञकर्मणि, प्रवर्तते=व्यवह्रियते, अतः सर्वाः परस्परविरुद्धा अपि श्रुतयो मानम् ।

**अर्थ**--सूर्योदय काल में, सूर्योदय के पहले तथा मध्याह्न में अग्निहोत्र करना चाहिये, यद्यपि ये श्रुतियाँ परस्पर विरुद्ध हैं, किन्तु तीनों श्रुतियों के प्रमाण होने से तीनों काल में ही अग्निहोत्रका विधान देखा जाता है ।।१५।।

[ श्रुतिं पश्यन्ति मुनयः स्मरन्ति तु यथास्मृति ।
तस्मात्प्रमाणं मुनयः प्रमाणं प्रथितं भुवि ।।३।।
धर्मव्यतिक्रमो दृष्टः श्रेष्ठानां साहसं तथा ।
तदन्वीक्ष्य प्रयुञ्जानाः सीदन्त्यपरधर्मजाः ।। ४ ।।

[ मुनि लोग वेदों का साक्षात्कार करते हैं और अपनी स्मृति के अनुसार उन्हें स्मरण करके व्यक्त करते हैं जो स्मृति कहलाती हैं । इसलिये मुनि लोग ही प्रमाण हैं और वे ही पृथ्वी में प्रसिद्ध हैं ।।३।। धर्मों में व्यतिक्रम देखा जाता है, बड़े लोगों का साहस भी देखा जाता है इनमें से भली-भाँति समझ-कर उसके अनुसार चलने वाले कल्याण को प्राप्त करते हैं और अन्य धर्मों को ग्रहण करने वाले कष्ट पाते हैं ।। ४ ।। ]

### धर्मशास्त्रका अधिकारी—

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित् ।।१६।।

**अन्वय**--यस्य निषेकादिश्मशानान्तः विधिः मन्त्रैः उदितः तस्य अस्मिन् शास्त्रे अधिकारः ज्ञेयः, अन्यस्य कस्यचित् न ( ज्ञेयः ) ।

**व्याख्या**--यस्य=ब्राह्मणादिवर्णस्य [ निषेक आदिः श्मशानश्च अन्ते यस्य सः ] निषेकादिश्मशानान्तः = गर्भाधानमारभ्यान्त्येष्टिपर्यन्तः, विधिः = संस्कारः, मन्त्रैः उदितः = कथितः' तस्यैव = ब्राह्मणादिवर्णस्य, अस्मिन् शास्त्रे = मनुस्मृतौ, अधि-

कारः ज्ञेयः, अन्यस्य=वर्णाश्रमादिशून्यस्य कस्यचिद्=म्लेच्छादेः, न ज्ञेयः=न वेदितव्यः।

अर्थ—जिन ब्राह्मणादि वर्णों का गर्भाधान से लेकर चितादाह पर्यंत संस्कार वैदिक मन्त्रों से कहा गया है उन्हीं का इस धर्मशास्त्र में अधिकार है, अन्य किसी का नहीं ॥ १६ ॥

ब्रह्मावर्त देश—

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १७ ॥

अन्वय—सरस्वतीदृषद्वत्योः देवनद्योः यद् अन्तरं तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ।

व्याख्या—[सरस्वती च दृषद्वती च सरस्वतीदृषद्वत्यौ, तयोः] सरस्वतीदृषद्वत्योः तन्नाम्न्योः, [देवानां नद्योः] देवनद्योः=सुरनद्योः, यद् अन्तरं=मध्यस्थं, तं [देवैः निर्मितं] देवनिर्मितं=देवविहितं देशं, ब्रह्मावर्त्तं, प्रचक्षते=कथयन्ति ।

अर्थ—सरस्वती तथा दृषद्वती इन दो नदियों के बीच का प्रदेश, जिसे देवताओं ने बनाया है, उसे ब्रह्मावर्त कहते हैं ॥ १७ ॥

सदाचारका लक्षण—

तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १८ ॥

अन्वय—तस्मिन् देशे सान्तरालानां वर्णानां पारम्पर्यक्रमागतः यः आचारः स सदाचारः उच्यते ।

व्याख्या—तस्मिन् देशे=ब्रह्मावर्त्ते, [अन्तरालेन सहितास्सान्तरालास्तेषां] सान्तरालानां=अवान्तरसहितानां, वर्णानां=विप्रादीनां, [परम्परायां भवः पारम्पर्यस्तस्य क्रमस्तेन आगतः] पारम्पर्यक्रमागतः=परम्पराक्रमेण प्राप्तः यः आचारः=शिष्टव्यवहारः स सदाचारः उच्यते=कथ्यते ।

अर्थ—उस ब्रह्मावर्त देश में अवान्तर सहित समस्त ब्राह्मणादि वर्णों की परम्परा से प्राप्त शिष्टाचारको ही सदाचार कहते हैं ॥ १८ ॥

[ विरुद्धा च विगीता च दृष्टार्थादिष्टकारणे ।
स्मृतिर्न श्रुतिमूला स्याद्या चैषा सम्भवश्रुतिः ॥ ५ ॥]

[प्रत्यक्ष ही प्रमाण है, इत्यादि जो वेद-विरुद्ध और सज्जनों से निन्दित स्मृति है वह श्रुतिमूलक नहीं है अतः प्रमाण नहीं हो सकती, वेदमूलक स्मृति ही प्रमाण होती है ॥ ५ ॥]

ब्रह्मर्षि देश—

कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥ १९ ॥

**अन्वय**—कुरुक्षेत्रं मत्स्याः पाञ्चालाः शूरसेनकाः च एष ब्रह्मावर्त्तात्-अनन्तरः देशः ब्रह्मर्षिदेशः उच्यते ।

**व्याख्या**—कुरुक्षेत्रं=कुरुणा कृष्टं, मत्स्याः, पाञ्चालाः, शूरसेनकाः=मथुरादयः च ब्रह्मावर्त्तात् अनन्तरः देशः ब्रह्मर्षिदेशः=तन्नामकः उच्यते=कथ्यते ।

**अर्थ**—कुरुक्षेत्र, मत्स्य, पाञ्चाल तथा शूरसेन, ये देश ब्रह्मावर्त्त के अनन्तर हैं, इन्हें ब्रह्मर्षि देश कहा जाता है ॥ १९ ॥

इन देशों के ब्राह्मणोंकी सर्वश्रेष्ठता—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ॥ २० ॥

**अन्वय**—पृथिव्यां सर्वमानवाः एतद्देशप्रसूतस्य अग्रजन्मनः सकाशात् स्वं स्वं चरित्रं शिक्षेरन् ।

**व्याख्या**—पृथिव्यां=जगतीतले [सर्वे च ते मानवाः] सर्वमानवाः=सर्वजनाः [एते च देशाः एतद्देशाः, तेषु प्रसूतस्तस्य] एतद्देशप्रसूतस्य=ब्रह्मावर्त्तादिदेशोत्पन्नस्य, [अग्रे जन्म यस्यासौ अग्रजन्मा, तस्य] अग्रजन्मनः=ब्राह्मणस्य, सकाशात्=सन्निधानात्, स्वं स्वं=आत्मीयम्, चरित्रं=आचरणीयं, शिक्षेरन् जानीयुः ।

**अर्थ**—पृथिवी में सभी मनुष्यों को इन देशों में उत्पन्न हुए ब्राह्मणों के द्वारा ही अपने-अपने चरित्र की शिक्षा लेनी चाहिये ।

मध्यदेश—

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ २१ ॥

**अन्वय**—हिमवद्विन्ध्ययोर्मध्यं, विनशनादपि प्राक्, प्रयागाच्च प्रत्यक्, (यः देशः) स मध्यदेशः प्रकीर्त्तितः ।

व्याख्या—[हिमवाँश्च विन्ध्यश्च हिमवद्विन्ध्यौ, तयोः] हिमवद्विन्ध्ययोः = हिमालयविन्ध्याचलयोः, यद् मध्यं = मध्यगतं, विनशनात् = तन्नामकात्, प्राक् = पूर्वः, प्रयागात् = तीर्थराजात् अपि प्रत्यक् = पश्चिमं यः देशः स मध्यदेशः प्रकीर्त्तितः = उक्तः ।

अर्थ—हिमालय तथा विन्ध्य का मध्यवर्ती जो देश, विनशन के पूर्व तथा प्रयाग से पश्चिम अवस्थित है, उसे मध्यदेश कहा जाता है ॥ २१ ॥

आर्यावर्त देश—

आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ २२ ॥

अन्वय—पूर्वात् तु समुद्रात् आ, पश्चिमात् समुद्रात् तु आ, तयोः गिर्योः एव अन्तरं देशं बुधाः आर्यावर्त्तं विदुः ।

व्याख्या—पूर्वात् तु समुद्रात्=भारतस्य पूर्वदिशि वर्त्तमानाब्धेः आ= पर्यन्तं, किञ्च पश्चिमसमुद्रात्, आ=पर्यन्तं, तयोः=हिमवद्विन्ध्ययोः, गिर्योः,=पर्वतयोः एव अन्तरं=मध्ये वर्त्तमानं देशं, बुधाः=विद्वांसः, आर्यावर्त्त [आर्याणामावर्त्तः=पुनः पुनरागमनं यत्र तत्] आर्यावर्त्तं=तन्नामकं, देशं, विदुः=कथयन्ति ।

अर्थ—भारत के पूर्व भाग में जो समुद्र है उससे पश्चिम भाग के समुद्र तक हिमालय और विन्ध्याचल के मध्यवर्ती देश को विद्वान् लोग 'आर्यावर्त' कहते हैं ।

यज्ञिय और म्लेच्छ देश का भेद—

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥ २३ ॥

अन्वय—यत्र तु कृष्णसारः मृगः स्वभावतः चरति स देशः यज्ञियः ज्ञेयः, अतः परं म्लेच्छदेशः ।

व्याख्या—यत्र=यस्मिन् देशे, कृष्णसारः=कृष्णवर्णो मृगविशेषः, मृगः= हरिणः, स्वभावतः=आञ्जस्येन, चरति=गच्छति, स देशः, [यज्ञे भवः] यज्ञियः =यज्ञार्हः ज्ञेयः=बोद्धव्यः, अतः परं=आर्यावर्त्तादिदेशानन्तरं [म्लेच्छानां देशः] म्लेच्छदेशः = आर्यवासानर्हः ।

अर्थ—जिस देश में कृष्णसार नामक मृग स्वेच्छा से विचरण करता हो वह देश यज्ञ के योग्य है, इन आर्यावर्त्तादि देशों के अतिरिक्त म्लेच्छदेश है २२।

एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः ।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद् वृत्तिकर्शितः ॥ २४ ॥

**अन्वय**—द्विजातयः एतान् देशान् प्रयत्नतः संश्रयेरन् शूद्रः वृत्तिकर्शितः सन् यस्मिन् कस्मिन् देशे निवसेत् ।

**व्याख्या**--द्विजातयः=ब्राह्मणादयः, एतान्=पूर्वोक्तान्, देशान्=ब्रह्मावर्त्तादीन्, प्रयत्नतः=प्रकृष्टोपायतः संश्रयेरन्=आश्रयेरन्, शूद्रः तु, [ वृत्त्या कर्शितः ] वृत्तिकर्शितः=वृत्तिपीडितः, सन् यस्मिन् कस्मिन्=आर्यावर्त्तादौ, म्लेच्छदेशे वा निवसेत्=वासं कुर्यात् ।

**अर्थ**—बाह्मणादि वर्णों को इन देशों में प्रयत्नपूर्वक निवास करना चाहिये । परन्तु शूद्र वृत्ति के अभाव में जहाँ कहीं भी आर्यावर्त्तादि अथवा म्लेच्छ देश में निवास कर सकता है ॥ २४ ॥

### वर्णधर्मों का उपक्रम—

एषा धर्मस्य वो योनिः समासेन प्रकीर्तिता ।
सम्भवश्चास्य सर्वस्य वर्णधर्मान्निबोधत ॥ २५ ॥

**अन्वय**--एषा धर्मस्य योनिः वः समासेन प्रकीर्त्तिता, अस्य सर्वस्य संभवः च, ( अधुना ) वर्णधर्मान् निबोधत ।

**व्याख्या**—पूर्वोक्ता, धर्मस्य, योनिः=उत्पत्तिस्थानम्, वः=युष्मान्, समासेन=संक्षेपेण, प्रकीर्तिता=सुकथिता, अस्य सर्वस्य=सृष्टेः, संभवश्च=उत्पत्तिश्च, ( उक्ता ) (अधुना) [ वर्णानां धर्माः, वर्णधर्मास्तान् ] वर्णधर्मान्=विप्रादिधर्मान्, निबोधत=श्रृणुत ।

**अर्थ**—मैंने धर्म के उत्पत्तिस्थानभूत उन देशों को कहा तथा समस्त जगत् की उत्पत्ति का प्रकार भी कह दिया, अब ब्राह्मणादि वर्णों के धर्मों को सुनो ॥२५॥

### वैदिक मंत्रों द्वारा संस्कार का विधान—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिद्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥

**अन्वय**--पुण्यैः वैदिकैः=कर्मभिः द्विजन्मनां प्रेत्य च इह च निषेकादिः पावनः शरीरसंस्कारः कार्यः ।

**व्याख्या**—पुण्यैः, [वेदे भवा वैदिकास्तैः] वैदिकैःवेदप्रोक्तैः, कर्मभिः=मन्त्रद्रव्यक्रियायोगैः, [द्वाभ्यां प्रसवसंस्काराभ्यां जन्म येषां ते द्विजन्मानस्तेषां]

द्विजन्मनां=ब्राह्मणादिवर्णानां, प्रेत्य=मरणानन्तरं, इह च=अस्मिन् लोके च, [ निषेक आदिर्यस्य सः ] निषेकादिः=गर्भाधानादिः, पावनः=पवित्रकरः [ शरीराणां संस्कारः ] शरीरसंस्कारः=बैजिकगार्भदोषपरिमार्जनोपायः कार्यः =कर्त्तव्यः ।

अर्थ—ब्राह्मणादि वर्णों को पवित्र गर्भाधानादि संस्कार इस लोक में तथा मरने के अनन्तर पुण्यदायक वैदिक मन्त्रों से करने चाहिये ॥ २६ ॥

### संस्कारों का फल—

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २७ ॥

अन्वय—गार्भैः होमैः जातकर्मचौडमौञ्जीनिबन्धनैः द्विजानां गार्भिकं बैजिकं च एनः अपमृज्यते ।

व्याख्या–[ गर्भाय हिताः गार्भास्तैः ] गार्भैः=गर्भहितकारकैः, होमैः= देवोद्देशेन वैधे आधारे द्रव्यप्रक्षेपादिभिः, [ जातस्य कर्म जातकर्म, चूडाया इदं चौडं, मुञ्जाया इयं मौञ्जी=मेखला, तस्याः निबन्धनं च मौञ्जीनिबन्धनम्, जातकर्म च चौडं च मौञ्जीनिबन्धनं च जातकर्मचौडमौञ्जीनिबन्धनानि, तैः ] जातकर्मचौडमौञ्जीनिबन्धनैः=जातकर्मचौलोपनयनादिभिः, [ बीजाद् भवं ] बैजिकं=पितृरेतोजन्यं, [ गर्भे भवं ] गार्भिकं=गर्भजन्यं च, एनः=दोषः, अपमृज्यते-दूरीक्रियते ।

अर्थ–ब्राह्मणादि वर्णों के पितृ वीर्य से उत्पन्न होनेवाले दोष तथा माता के गर्भ से उत्पन्न होने वाले दोष जातकर्म, चूडाकर्म तथा यज्ञोपवीत आदि संस्कारोंके करने से मिट जाते हैं ॥ २७ ॥

### स्वाध्यायादि का फल—

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २८ ॥

अन्वय–स्वाध्यायेन, व्रतैः, होमैः, त्रैविद्येन, इज्यया, सुतैः, महायज्ञैः, यज्ञैः च इयं तनुः ब्राह्मी क्रियते ।

व्याख्या–स्वाध्यायेन=वेदादिसच्छास्त्राध्ययनेन, व्रतैः=नियमैः, होमैः= होमाख्यकर्मभिः, त्रैविद्येन=तत्कर्मणा, इज्यया=देवर्षिपितृतर्पणैः, सुतैः=

पुत्रोत्पादनैः, महायज्ञैः=बलिवैश्वदेवादितीर्थपूजनैः, यज्ञैः=अग्निष्टोमादिभिश्च इयं तनुः=शरीरं, [ ब्रह्मणः इयं ] ब्राह्मी=ब्रह्मसाक्षात्कारयोग्यं, क्रियते= विधीयते।

अर्थ-स्वाध्याय, व्रत, होम, त्रैविद्य, देवर्षिपितृतर्पण, पुत्रोत्पादन, वलिवैश्वदेवादि महायज्ञ तथा अग्निष्टोमादि यज्ञों से इस शरीर को ब्रह्मसाक्षात्कार के योग्य बनाया जाता है ॥ २८ ॥

## जातकर्म संस्कार—

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥

अन्वय--पुंसः नाभिवर्धनात् प्राक् जातकर्म विधीयते, अस्य मन्त्रवत् हिरण्यमधुसर्पिषां प्राशनं च ।

व्याख्या--पुंसः-जातकस्य [ नाभेः वर्धनं नाभिवर्धनं, तस्मात् ] नाभिवर्धनात्=नालच्छेदनात् प्राक्=पूर्वं, जातकर्म=तदाख्यः संस्कारः, विधीयते= विधानं क्रियते, ( तत्र ) अस्य=जातकस्य, मन्त्रवत्=मन्त्रसहितं [हिरण्यं च मधु च सर्पिश्च हिरण्यमधुसर्पींषि, तेषां ] हिरण्यमधुसर्पिषाम्=सुवर्णमधुघृतानां, प्राशनं=प्रकर्षेण अशनं च, भवतीति शेषः ।

अर्थ--नालच्छेदनके पूर्व बालकका जातकर्म संस्कार करना चाहिये, इस संस्कारमें मन्त्रके साथ बालकको सुवर्ण, मधु तथा घृतका प्राशन करानेकी विधि है ॥ २९ ॥

## नामकरण संस्कार—

नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहुर्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥

अन्वय--अस्य दशम्यां द्वादश्यां पुण्ये तिथौ मुहूर्त्ते गुणान्विते वा नक्षत्रे नामधेयं कारयेत् ।

व्याख्या--अस्य=बालकस्य, दशम्यां=दशमदिवसे, द्वादश्यां=द्वादशेऽहनि, पुण्ये तिथौ=रिक्तादिदोषरहितायाँ तिथ्यां, मुहूर्त्ते=भद्राव्यतीपातादिदोषरहिते,[गुणैरन्वितः गुणान्वितस्तस्मिन्]गुणान्विते=प्रशस्तगुणयुक्ते, नक्षत्रे= अनुराधादौ वा, नामधेयं=नामकरणं, कारयेत्=स्वयं कुर्यात् पुरोहितादिभिः कारयेत् वा ।

**अर्थ**--उत्पन्न हुए बालक का नामकरण दशवें या बारहवें दिन करना चाहिए अथवा किसी पुण्य तिथि, पुण्य नक्षत्र या प्रशस्त गुणवाले नक्षत्रों में भी किया जा सकता है ॥ ३० ॥

### वर्ण के अनुसार नामकरण का विधान—

**मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।**
**वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३१ ॥**

**अन्वय**--ब्राह्मणस्य = मङ्गल्यं, क्षत्रियस्य बलान्वितं, वैश्यस्य धनसंयुक्तं, शूद्रस्य तु जुगुप्सितम् ( नामकरणं कुर्यात् कारयेद् वा ) ।

**व्याख्या**--ब्राह्मणस्य = विप्रस्य, मंगल्यं = मंगलार्हं, क्षत्रियस्य [ बलेन अन्वितं ] बलान्वितं = बलयुक्तं, वैश्यस्य, [ धनेन संयुक्तं ] धनसंयुक्तं, शूद्रस्य तु जुगुप्सितम् = यथा कथंचित् वा नामकरणं कारयेदिति शेषः ।

**अर्थ**—ब्राह्मण का नामकरण मांगलिक शब्दों से युक्त, क्षत्रिय का प्रशस्त बलवाचक शब्दों से युक्त, वैश्य का धन से युक्त तथा शूद्र का जैसा कैसा नामकरण किया जाना चाहिए ॥ ३१ ॥

**शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।**
**वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ ३२ ॥**

**अन्वय**--ब्राह्मणस्य नाम शर्मवत्, राज्ञः ( नाम ) रक्षासमन्वितम्, वैश्यस्य ( नाम ) पुष्टिसंयुक्तं, शूद्रस्य (नाम ) प्रेष्यसंयुक्तम्, कुर्यात् ।

**व्याख्या**--ब्राह्मणस्य = विप्रस्य, नाम शर्मवद्--कल्याणयुक्तं देवशर्मेत्यादि, राज्ञः = क्षत्रियस्य, [ रक्षया समन्वितम् ] रक्षासमन्वितम् = प्रतापवर्मन्नित्यादि, वैश्यस्य [ पुष्ट्या संयुक्तं ] पुष्टिसंयुक्तं = मणिगुप्तेत्यादि, शूद्रस्य [ प्रेष्येण संयुक्तं ] प्रेष्यसंयुक्तं = देवदासेत्यादि नामकरणं कुर्यात् ।

**अर्थ**--ब्राह्मण का नाम मांगलिक, क्षत्रिय का रक्षणात्मक, वैश्य का पुष्टि से युक्त तथा शूद्र का नाम दासादि शब्दों से युक्त होना चाहिए ॥ ३२ ॥

### स्त्रियों का नामकरण—

**स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।**
**मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ ३३ ॥**

**अन्वय**--स्त्रीणां ( नामकरणं ), सुखोद्यम्, अक्रूरं, विस्पष्टार्थं, मनोहरम्, मङ्गल्यं, दीर्घवर्णान्तं, आशीर्वादाभिधानवत् (कुर्यात् ) ।

व्याख्या--स्त्रीणां (नामकरणं), [सुखेन उद्यम्] सुखोद्यम्=सुखेन वक्तुं योग्यं, [न क्रूरम्] अक्रूरं=कटुवर्णरहितं, [विस्पष्टः अर्थो यस्य तत्] विस्पष्टार्थं=स्पष्टशब्दयुक्तं, [मनोहरतीति] मनोहरं=मनोज्ञं, मङ्गल्यं=प्रशस्त मङ्गलयुक्तं, [दीर्घवर्णः अन्ते यस्य तत्] दीर्घवर्णान्तं=दीर्घवर्णयुक्तं, [आशीर्वादस्याभिधानं अस्ति अस्मिन्निति] आशीर्वादाभिधानवत्=आशीर्वादसंयुक्तं, कुर्यात् यथा यशोदेति ।

अर्थ--स्त्रियों का नाम सुख से उच्चारण करने योग्य, कटुवर्णों (टवर्गादि) से रहित, स्पष्ट, मनोहर मांगलिक दीर्घ अक्षर से संयुक्त तथा आशीर्वादात्मक शब्दों से युक्त होना चाहिए जैसे--यशोदा ॥३२॥

## निष्क्रमण और अन्नप्राशन का काल—

चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥ ३४ ॥

अन्वय--चतुर्थे मासि गृहात् शिशोः निष्क्रमणं कर्तव्य षष्ठे (मासि) अन्नप्राशनं, यद्वा (अस्य कुले इष्टम् मंगलं च ।

व्याखया--चतुर्थे मासि, गृहात्=गेहात्, शिशोः=बालकस्य, निष्क्रमणं=निर्गमनं, कर्त्तव्यं षष्ठे मासि [अन्नस्य प्राशनं] अन्नप्राशनं=तन्नामकः संस्कारः, यद्वा अस्य=बालकस्य, कुले, इष्टम्=अभिमतं, मङ्गलं=कल्याणप्रदं च ।

अर्थ--चौथे महीने में बालक को घर से बाहर लाना चाहिये, छठवें महीने में अन्नप्राशन कराना चाहिये अथवा बालक के कुल-क्रम में जो (मास) अभीष्ट तथा मङ्गलदायक चला आ रहा हो उसमें भी अन्नप्राशन की विधि है ॥३४॥

## चूडाकर्म का काल—

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ ३५ ॥

अन्वय--सर्वेषाम् एव द्विजानीनां चूड़ाकर्म प्रथमे अब्दे तृतीये (अब्दे) वा धर्मतः श्रुतिचोदनात् कर्त्तव्यम् ।

व्याख्या--सर्वेषाम् एव द्विजातीनां=ब्राह्मणादीनां, [चूड़ा क्रियते अस्मिन्निति] चूड़ाकर्म=तन्नामकः संस्कारः, प्रथमे अब्दे=प्रथमवर्षे, तृतीये=तृतीये वर्षे, धर्मतः=धर्मकारणात्, [श्रुतेः चोदनं, तस्मात्] श्रुतिचोदनात्=वेदप्रेरणात्, वा कर्त्तव्यम्=कार्यम् ।

**अर्थ**--सभी द्विजाति वर्णों का चूडाकर्म संस्कार पहले अथवा तीसरे वर्ष में धर्म की दृष्टि से तथा वेद की आज्ञा के अनुसार करना चाहिये ॥ ३५॥

उपनयन का काल—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ३६ ॥

**अन्वय**—ब्राह्मणस्य उपनायनं गर्भात् अष्टमे अब्दे कुर्वीत (किञ्च) राज्ञः गर्भाद् एकादशे ( अब्दे ) विशः तु गर्भात् द्वादशे ( अब्दे कुर्वीत )।

**व्याख्या**--ब्राह्मणस्य=विप्रस्य, [ नीयते अस्मिन्निति नयनं, नयनमेव नायनं, उप=समीपे नायनम्] उपनायनं=उपनयनसंस्कारः, गर्भात्-गर्भधारण-वर्षात्, अष्टमे अब्दे=वर्षे, कुर्वीत, राज्ञः=क्षत्रियस्य, गर्भात् एकादशे अब्दे कुर्वीत, विशः=वैश्यस्य तु, गर्भात् द्वादशे अब्दे कुर्वीत।

**अर्थ**--ब्राह्मण का उपनयन संस्कार, गर्भ से आठवें वर्ष में क्षत्रिय का गर्भ से ग्यारहवें वर्ष में तथा वैश्य का १२ वें वर्ष में करना चाहिये ॥ ३६ ॥

विशेष कामनापरक उपनयन-काल—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ३७ ॥

**अन्वय**--इह ब्रह्मवर्चसकामस्य विप्रस्य पञ्चमे (अब्दे), किञ्च, बलार्थिनः राज्ञः षष्ठे अब्दे, अर्थिनः वैश्यस्य गर्भात् अष्टमे अब्दे उपनयनं कार्यम्।

**व्याख्या**—[ब्रह्मणो वर्चः ब्रह्मवर्चसम्, तत् कामो यस्य सः ब्रह्मवर्चसकाम-स्तस्य] ब्रह्मवर्चसकामस्य=ब्रह्मतेजस्कामस्य, विप्रस्य=ब्राह्मणस्य, गर्भात् पञ्चमे-अब्दे-पञ्चमे वर्षे, [अर्थोऽस्यास्तीत्यर्थी, बलस्यार्थी बलार्थी, तस्य] बलार्थिनः=बलकामस्य, राज्ञः=क्षत्रियस्य, षष्ठे अब्दे=षष्ठे वर्षे, अर्थिनः=धनकामस्य, विशः=वैश्यस्य, गर्भात् अष्टमे अब्दे=अष्टमे वर्षे, उपनयनं=तदाख्यसंस्कारः, कार्यम्।

**अर्थ**--ब्रह्मतेज की प्राप्ति चाहने वाले ब्राह्मण का गर्भ से पाँचवें वर्ष में क्षत्रिय का गर्भ से छठवें में तथा वैश्य का गर्भ से आठवें वर्ष में यज्ञोपवीत, संस्कार करना चाहिये ॥ ३७ ॥

उपनयन का अन्तिम काल—

आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ ३८ ॥

अन्वय--ब्राह्मणस्य आषोडशाद्, क्षत्रबन्धोः आद्वाविंशात्, विशः आचतु-विंशतेः सावित्री नातिवर्तते ।

व्याख्या--ब्राह्मणस्य=विप्रस्य, आषोडशात्=षोडशवर्षपर्यन्तं, क्षत्रबन्धोः= क्षत्रियस्य, आद्वाविंशात्,=द्वाविंशतिवर्षपर्यन्तं, विशः=वैश्यस्य, आचतुर्विं-शतेः=चतुर्विंशति वर्षपर्यन्तं, सावित्री=गायत्री, नातिवर्तते=अतिक्रमणं न करोति ।

अर्थ--ब्राह्मणका गर्भ से सोलह वर्ष पर्यन्त, क्षत्रियका गर्भ से २२ व पर्यन्त तथा वैश्यका २४ वर्ष पर्यन्त गायत्री का अतिक्रमण नहीं होता अर्था इन वर्षों के भीतर गायत्री का उपदेश किया जा सकता है ॥ ३८ ॥

व्रात्य का लक्षण--

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ ३९ ।

अन्वय--अत ऊर्ध्वं यथाकालम् असंस्कृता एते त्रयः अपि सावित्रीपति आर्यविगर्हिता व्रात्या भवन्ति ।

व्याख्या--अत ऊर्ध्वं=अस्मात् परं, [कालमनतिक्रम्येति] यथाकालं= तत्तन्निर्दिष्टकालपर्यन्तं, असंस्कृताः=संस्काररहिताः, एते त्रयः अपि ब्राह्मणादय [ :सावित्र्याः पतिताः ] सावित्रीपतिताः=गायत्र्यधिकारहीनाः [ आर्यैः वि हिताः ]आर्यविगर्हिताः=शिष्टसंभाषणायोग्याः, व्रात्याः=यौनादिसंबन्धान भवन्ति ।

अर्थ--उपर्युक्त इन वर्षों के भीतर ब्राह्मणादि का संस्कार न करने से सावित्री से पतित हो जाते हैं। वे शिष्ट लोगों से विद्या तथा यौन आ सम्बन्ध के योग्य नहीं रहते और व्रात्य हो जाते हैं ॥ ३९ ॥

व्रात्यों से सम्बन्ध का निषेध—

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥ ४० ।

अन्वय--ब्राह्मणः विधिवत् अपूतैः एतैः सह हि आपदि अपि कर्हि ब्राह्मान यौनान् च सम्बन्धान् क्वचित् न आचरेत् ।

व्याख्या– ब्राह्मणः, विधिवत्=शास्त्रमर्यादया, अपूतैः=अपवित्रैः, पूतैः=व्रात्यैः, सह=साकं, हि=निश्चयेन, आपदि=विपत्तावपि, कर्हिचित्= कस्मिन् कालेऽपि, ब्राह्मान्=वैदिकाध्ययनादीन्, यौनान्=कन्यादानादीन्, सम्बन्धान्, क्वचित् न आचरेत्=न कुर्यात् ।

अर्थ—ब्राह्मण, शास्त्र मर्यादा के अनुसार अपवित्र इन व्रात्यों के साथ विपत्ति अथवा अन्य किसी भी काल में वेदाध्ययनादि तथा विवाहादि सम्बन्ध कदापि न करें ॥ ४० ॥

ब्रह्मचारी के धारणयोग्य वस्तुएँ--

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ ४१ ॥

अन्वय—ब्रह्मचारिणः आनुपूर्व्येण कार्ष्णरौरववास्तानि चर्माणि, शाणक्षौमाविकानि च वसीरन् ।

व्याख्या--ब्रह्मचारिणः=बटवः, आनुपूर्व्येण=क्रमेण, [ कृष्णस्य इदं कार्ष्णं, रुरोरिदं रौरवं, वस्तस्य इदं वास्तं, कार्ष्णं च रौरवं च वास्तं च]कार्ष्णरौरववास्तानि=कृष्ण-रुरु-अजसम्बन्धीनि चर्माणि [शाणं च क्षौमं च आविकं च ता] शाणक्षौमाविकानि ] = शणक्षौममेषनिर्मितानि वस्त्राणि च वसीरन्= परिदधीरन् ।

अर्थ---ब्रह्मणादि वर्णों के ब्रह्मचारी, क्रमशः कृष्णमृगचर्म, रुरुमृगचर्म तथा अजाचर्म एवं सन, रेशमी तथा ऊनके वस्त्रोंको धारण करें ॥ ४१ ॥

मेखला--

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥

अन्वय—विप्रस्य मेखला, मौञ्जी त्रिवृद् समा श्लक्ष्णा कार्या, क्षत्रियस्य ( मेखला ) मौर्वीज्या, वैश्यस्य ( मेखला ) शणतान्तवी ( कार्या ) ।

व्याख्या—विप्रस्य=ब्राह्मणस्य, मेखला, [ मुञ्जस्य इयं ] मौञ्जी= मुञ्ज-निर्मिता, [ त्रयः वृतः यस्याः साः ] त्रिवृत्=त्रिगुणा, समा=न्यूनाधिक्यरहिता, श्लक्ष्णा=चिक्कणा, कार्या=कर्तव्या, क्षत्रियस्य मेखला तु, [मौर्व्याः ज्या] मौर्वीज्या=धनुर्गुणानुस्यूता, वैश्यस्य (मेखला) [शणस्य तन्तुः शणतन्तुस्तस्येयं ] शणतान्तवी=शणतन्तुनिर्मिता कार्या ।

**अर्थ**—ब्राह्मण ब्रह्मचारीकी मेखला मूँजकी बनी हुई, तीन धागेकी ह चाहिये, वह सम तथा चिकनी भी हो, इसी प्रकार क्षत्रिय ब्रह्मचारी मेखला धनुष की प्रत्यञ्चा की तथा वैश्य ब्रह्मचारी की मेखला शणतन्तुनि ( सनई के धागे की बनी ) होनी चाहिये ।। ४२ ।।

मूँज आदि के अभाव में प्रतिनिधि--

मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ।। ४३ ।।

**अन्वय**--मुञ्जालाभे तु कुशाश्मन्तकबल्वजैः ( निर्मिता ), त्रिवृता, ग्रन्थिना, त्रिभिः, ( पञ्चभिः ) वा (ग्रन्थिभिः संयुक्ता ) कर्त्तव्या ।

**व्याख्या**—[न लाभोऽलाभः, मुञ्जस्यालाभः मुञ्जालाभस्तस्मिन्] मु लाभे = मुञ्जाप्राप्तौ, [कुशाश्च अश्मन्तकाश्च बल्वजाश्च कुशाश्मन्तकबल्वजा कुशाश्मन्तकबल्वजैः = तत्तत्तृणविशेषैः ( निर्मिता ), त्रिवृता = त्रिगुणेन, ग्रन्थिना, वा = अथवा त्रिभिः पञ्चभिः ( ग्रन्थिभिः ) संयुक्ता कर्त्तव्या ।

**अर्थ**--मूँज के न मिलने पर ब्रह्मचारी की मेखला कुशकी, क्ष ब्रह्मचारी की अश्मन्तक की तथा वैश्य की बल्वजतृण की बनी हुई, तेहरी तीन या पाँच ग्रन्थियों से युक्त होनी चाहिये ।। ४३ ।।

[ यहाँ यह स्मरण रखना चाहिये कि एक ग्रन्थि सामान्यतः सबके है । कुछ ऋषियों के मत से जो तीन या पाँच ग्रन्थियाँ कही गई प्रवर-भेद से हैं । अर्थात् तीन प्रवरवालों की तीन और पाँच प्रवर के-लिये पाँच ग्रन्थियों का विधान है ।

यज्ञोपवीत--

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ।। ४४ ।।

**अन्वय**—विप्रस्य उपवीतं कार्पासम्, ऊर्ध्ववृतं त्रिवृत, एवं (उपवीतं) शणसूत्रमयं (ऊर्ध्ववृतं त्रिवृत्), वैश्यस्य (उपवीतं) आविकसौ (ऊर्ध्ववृतं त्रिवृत् ) स्यात् ।

**व्याख्या**— विप्रस्य = ब्राह्मणस्य, उपवीतं = यज्ञोपवीतं [कर्पासस्य कार्पासम् = कार्पासनिर्मितं, [ ऊर्ध्वेन वृतं ] ऊर्ध्ववृतं, त्रिवृत् = त्रिगुणं

वं राज्ञः=क्षत्रियस्य, [ शणसूत्रस्य विकारः ] शणसूत्रमयं, ( ऊर्ध्ववृतं त्रिवृत् स्यात् ), वैश्यस्य उपवीतं, [ अवस्येदमाविकं आविकं च तत सूत्रमाविकसूत्रम्, वि भवम् ] आविकसौत्रिकम्=मेषलोमनिर्मितं ( ऊर्ध्ववृतं, त्रिवृत् स्यात् ) ।

अर्थ--ब्राह्मण का यज्ञोपवीत, कपास के सूत से बना हुआ, ऊर्ध्वग्रन्थि युक्त तथा त्रिगुणित होना चाहिये । इसी प्रकार क्षत्रिय का सनई से बना ना ऊर्ध्ववृत त्रिवृत् तथा वैश्य का भेड़ के ऊन का बना हुआ ऊर्ध्ववृत, गुण युक्त होना चाहिये ॥४४॥

दण्ड--

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥४५॥

अन्वय—ब्राह्मणः बैल्वपालाशौ, क्षत्रियः वाटखादिरौ, वैश्यः पैलवोदुम्बरौ र्मतः दण्डान् अर्हन्ति ।

व्याख्या--ब्राह्मणः =विप्रः [ बिल्वस्यायं बैल्वः, पलाशस्यायं पालाशः, ल्वश्च पालाशश्च ] बैल्वपालाशौ=बिल्वपलाशनिर्मितौ, क्षत्रियः [ वटस्यायं त्रि खदिरस्यायं खादिरः, वाटश्च खादिरश्च ] वाटखादिरौ=वटखदिरभूतौ एव : [ पीलोः अयं पैलवः, उदुम्बरस्यायं औदुम्बरः, पैलवश्चोदुम्बरश्च ] वोदुम्बरौ=गुडफल-जन्तुफलभवौ, धर्मतः =नियमतः, दण्डान् अर्हन्ति= धारण-योग्यास्सन्ति ।

अर्थ--ब्राह्मण का दण्ड धर्म की दृष्टि से बेल अथवा पलाश के वृक्ष का, यका दण्ड वट अथवा खैर के वृक्ष का तथा वैश्य का दण्ड पीलु अथवा र के वृक्ष का बना हुआ होना चाहिये ॥४५॥

दण्ड का प्रमाण—

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥४६॥

अन्वय--ब्राह्मणस्य प्रमाणतः केशान्तिकः दण्डः, क्षत्रियस्य ललाटसम्मितः : नासान्तिकः कार्यः ।

व्याख्या--ब्राह्मणस्य=विप्रस्य, प्रमाणतः=प्रमाणानुसारतः [ केशान्तः गमस्येति ] केशान्तिकः=केशपर्यन्तः, दण्डः, क्षत्रियस्य [ललाटेन सम्मितः]

ललाटसम्मितः = ललाटपर्यन्तः, (दण्डः कार्यः) एवं विशः = वैश्यस्य [नासां प्रमाणमस्येति] नासान्तिकः = नासिकाग्रपर्यन्तः, (दण्डः कार्यः) ।

अर्थ—ब्राह्मण ब्रह्मचारी का दण्ड केशपर्यन्त, क्षत्रिय का ललाट पर्यन्त तथा वैश्य का दण्ड नासिका पर्यन्त प्रमाण में होना चाहिये ॥४६॥

## दण्ड का स्वरूप—

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥४७॥

अन्वय—ते सर्वे तु ऋजवः, अव्रणाः, सौम्यदर्शनाः नृणाम् अनुद्वेगकराः सत्वचः, अनग्निदूषिताः स्युः ।

व्याख्या—ते सर्वे=ब्राह्मणादिण्डाः ऋजवः=सरलाः अवक्राः अव्रणाः व्रणरहिताः, सौम्यदर्शनाः=सुशोभनाः, नृणां=पुरुषाणां [न उद्वेगः अनुद्वेगः अनुद्वेगं कुर्वन्तीति] अनुद्वेगकराः=अक्षोभकारकाः मनोहराः [त्वचा सहिताः] सत्वचः=वल्कलयुक्ताः, [अग्निना दूषिताः अग्निदूषिताः, न अग्निदूषिताः] अनग्निदूषिताः=अदग्धाः, स्युः=भवेयुः ।

अर्थ—उन ब्राह्मणादि ब्रह्मचारियों के दण्ड सीधे, गाँठ से रहित देखने में सुन्दर होने चाहिये । उन दण्डों से किसी भी पुरुष को भय उत्पन्न न हो तथा वे छिलके से युक्त हों और अग्नि से जले न हों ॥४७॥

## भिक्षा का विधान

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद् भैक्षं यथाविधि ॥४८॥

अन्वय—(ब्रह्मचारी) ईप्सितं दण्डं प्रतिगृह्य, भास्करं उपस्थाय, प्रदक्षिणं परीत्य च यथाविधि भैक्षं चरेत् ।

व्याख्या—ब्रह्मचारी, ईप्सितं=स्वस्ववर्णानुरूपं शास्त्रसम्मतं, दण्डं गृह्य=दण्डं गृहीत्वा भास्करं=सूर्यम्, उपस्थाय = वैदिकमन्त्रेण उपस्थानं अग्नि=वह्नि, प्रदक्षिणं परीत्य=प्रदक्षिणं कृत्वा, [विधिमनतिक्रम्य] यथाविधि=शास्त्रानुसारेण, भैक्षं=भिक्षाचरणं, चरेत्=कुर्यात् ।

अर्थ—ब्राह्मणादि वर्णों के ब्रह्मचारी अपने-अपने धर्मानुसार दण्ड को लेकर सूर्य का उपस्थान करें, फिर अग्नि की प्रदक्षिणा कर शास्त्रानुसार भिक्षा-चरण करें ॥ ४८ ॥

भिक्षा-ग्रहण का प्रकार—

भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥

अन्वय—उपनीतः द्विजोत्तमः भवत्पूर्वं भैक्षं चरेत्, राजन्यः भवन्मध्यं, वैश्यः तु भवदुत्तरम् ( भैक्षं चरेत् ),

व्याख्या—उपनीतः=कृतोपनयनः, द्विजोत्तमः ब्राह्मणवटुः, [ 'भवत्' शब्दः पूर्वं यस्मिंस्तत् भवत्पूर्वं 'भवति भिक्षां देहि' इति रूपेण भवच्छब्दं पूर्व-मुच्चारयन्, एवं राजन्यः [ भवत् मध्ये यस्मिंस्तत् ] भवन्मध्यं 'भिक्षां भवति देहीति' रूपेण उच्चारयेत्, वैश्यः तु [भवत् उतरे यस्मिंस्तत्] भवदुत्तरं=भवदन्तं 'भिक्षा देहि भवति' इत्येवं रूपं, भैक्षं=भिक्षाकर्म चरेत् ।

अर्थ—यज्ञोपवीत को धारण करने वाला ब्राह्मण ब्रह्मचारी 'भवति भिक्षां देहि' इस प्रकार भवत् शब्द का पूर्व में उच्चारणकर भिक्षा माँगे, क्षत्रिय ब्रह्मचारी 'भिक्षां भवति देहि' भवत् शब्द का मध्य में उच्चारण कर, तथा वैश्य ब्रह्मचारी 'भिक्षां देहि भवति' भवत् शब्द का अन्त में उच्चारणकर भिक्षा माँगे ॥ ४९ ॥

भिक्षा किससे ग्राह्य है--

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ ५० ॥

अन्यव—ब्रह्मचारी प्रथमं मातरं, मातुः स्वसारं निजां भगिनीं वा भिक्षां भिक्षेत, या च एनं न अवमानयेत् ।

व्याख्या—ब्रह्मचारी प्रथमं = आदौ, मातरं = जननीं, मातुः=जनन्याः, स्वसारं=भगिनीं, निजां भगिनीं=स्वकीयां स्वसारं वा भिक्षां, भिक्षेत,=याचेत, या च एनं=ब्रह्मचारिणं, न अवमानयेत्=अवमानं न कुर्यात् ।

अर्थ—ब्रह्मचारी पहिले अपनी माता, सगी मौसी अथवा बहिन से भिक्षा माँगे, जो उसका अपमान न करें ॥ ५० ॥

भिक्षाकी उपयोग-विधि--

समाहृत्य तु तद् भैक्षं यावदन्नममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ ५१ ॥

अन्वय--तद् भैक्षं तु समाहृत्य, यावदन्नं अमायया गुरवे निवेद्य ( पश्चात् तदाज्ञया ) आचम्य, शुचिः प्राङ्मुखः अश्नीयात् ।

व्याख्या--तद् [ भिक्षाणां समूहः ] भैक्षं=भिक्षासमूहं, समाहृत्य=एकत्रीकृत्य, यावदन्नं = सम्पूर्णमन्नं, अमायया=अकापट्येन, गुरवे निवेद्य=अर्पयित्वा, ( पश्चात् तदाज्ञया ) आचम्य=आचमनं कृत्वा, शुचिः=पवित्रः सन् प्राङ्मुखः=पूर्वाभिमुखः, अश्नीयात्=भुञ्जीत ।

अर्थ--ब्रह्मचारी भिक्षासे मिले हुए सम्पूर्ण अन्नको एकत्रितकर गुरुको निष्कपट रूप से समर्पित करे । फिर उनकी आज्ञा से आचमनकर पवित्र हो पूर्वाभिमुख होकर अन्न का भोजन करे ॥ ५१ ॥

काम्य भोजन-फल--

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ५२ ॥

अन्वय--आयुष्यं ( इच्छन् ) प्राङ्मुखः, यशस्यं दक्षिणामुखः, श्रियं ( इच्छन् ) प्रत्यङ्मुखः ऋतम् ( इच्छन् ) उदङ्मुखः भुङ्क्ते ।

व्याख्या--[ आयुषे हितम् ] आयुष्यं=आयुःकामनायै ( अन्नं ) प्राङ्मुखः=पूर्वाभिमुखः, [यशसे हितं] यशस्यं = यशोलाभाय दक्षिणाभिमुखः भुङ्क्ते, श्रियं=लक्ष्मीम् (इच्छन्) प्रत्यङ्मुखः=पश्चिमाभिमुखः, एवं ऋतं सत्यम् ( इच्छन् ) उदङ्मुखः=उत्तराभिमुखः भुङ्क्ते ।

अर्थ--आयु की कामना करने वाले को पूर्व की ओर, यश की कामना करनेवाले को दक्षिण की ओर, लक्ष्मी की कामना करनेवाले को पश्चिम की ओर तथा सत्य चाहनेवाले को उत्तर की ओर मुख करके भोजन करना चाहिये ॥ ५ ॥

[ सायं प्रातर्द्विजातीनामशनं स्मृतिनोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ ६ ॥ ]

अन्वय—द्विजातीनां सायं प्रातः ( इति वारद्वयं ) अशनं स्मृतिनोदितम् ( अतः ) अन्तरा भोजनं न कुर्यात् (अयं) विधिः अग्निहोत्रसमः (कथितः)।

व्याख्या—द्विजातीनां=ब्राह्मणादिवर्णानाम्, सायं प्रातः इति वारद्वयम्, अशनं=भोजनं, [ स्मृतिना नोदितं ] स्मृतिनोदितं=स्मृतिप्रतिपादितं, अतः अन्तरा=मध्ये भोजनं न कुर्यात् = नाश्नीयात्, अयं विधिः=शिष्टाचारः, [ अग्निहोत्रेण समः ] अग्निहोत्रसमः=अग्निहोत्रतुल्यः (कथितः)।

अर्थ—ब्राह्मणादि वर्णों का सायं तथा प्रातः दो बार ही भोजन स्मृतियों में कहा गया है, अतः मध्य में भोजन नहीं करना चाहिये। यह विधि अग्निहोत्र के समान है ॥६॥

भोजन के आद्यन्त में आचमन—

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः।
भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥५३॥

अन्वय--द्विजः नित्यं उपस्पृश्य समाहितः अन्नम् अद्यात् भुक्त्वा च सम्यक् अद्भिः उपस्पृशेत्, खानि च संस्पृशेत्।

व्याख्या--द्विजः=ब्राह्मणादिः, नित्यम् उपस्पृश्य=नित्यमाचम्य, समाहितः =एकाग्रचितः (सन्) अन्नम्, अद्यात्=अश्नीयात, भुक्त्वा च=भोजनानन्तरं च, सम्यक् अद्भिः=जलेन, उपस्पृशेत्=आचामेत, खानि=चक्षुरादीनि च संस्पृशेत्=जलेन स्पर्शं कुर्यात्।

अर्थ--ब्राह्मण को नित्य आचमनकर एकाग्रचित्त हो भोजन करना चाहिये। भोजन करने पर अच्छी प्रकार जल से आचमन करे और फिर इन्द्रियों का स्पर्श करे ( आँख, कान, नाक, मुख ये छिद्रवाली इन्द्रियाँ हैं जिनका स्पर्श किया जाता है ) ॥५३॥

अन्न के प्रति श्रद्धा का विधान-

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥४५॥

अन्वय--अशनं नित्यं पूजयेत्, एतत् च अकुत्सयन् सततं अद्यात्, (एतत्) दृष्ट्वा हृष्येत्, प्रसीदेत् च किञ्च सर्वशः प्रतिनन्देत् च।

व्याख्या--अशनं=भोजनं, नित्यं पूजयेत्=अर्चेत, एतत् च=अन्नम्, अकुत्सयन्=अनिन्दन्, अद्यात्=अशनं कुर्यात्, किञ्च, एतद् दृष्ट्वा हृष्येत्=सन्तुष्येत्, प्रसीदेत=प्रसन्नो भवेत्, किञ्च सर्वशः-सर्वतोभावेन प्रतिनन्देत्=स्तुयात्, एतन्नित्यं मे भवेदित्यादिरूपेण ।

अर्थ—भोजन को नित्य आदर की दृष्टि से देखे और उसकी निन्दा न करता हुआ भोजन करे, सदैव इसे देखकर सन्तुष्ट तथा प्रसन्न रहना चाहिये तथा सदैव उसकी स्तुति करनी चाहिये ॥५४॥

भोजन के प्रति श्रद्धा-अश्रद्धा का फल--

पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद् भुक्तमुभयं नाशयेदिदम् ॥५॥

अन्वय—हि पूजितम् अशनं नित्यं बलम्, ऊर्जं च यच्छति, तत् अपूजितं भुक्तं तु इदम् उभयं नाशयेत् ।

व्याख्या—हि=निश्चयेन, पूजितं=अर्चितं, अशनं=भोजनं, नित्यं बलं ऊर्जं=तेजः च, यच्छति=ददाति, तत् अपूजितं=गर्हितं तु, इदम् उभयं=बलमूर्जं च, नाशयेत्=नाशं कुर्यात् ।

अर्थ—निश्चय ही आदरपूर्वक अन्न का भोजन करने से बल और तेज की वृद्धि होती है, परन्तु अन्न की निन्दाकर भोजन करने से बल तथा तेज दोनों का विनाश होता है ॥५५॥

उच्छिष्ट ( जूठे ) का निषेध—

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथाऽन्तरा ।
न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥५६॥

अन्वय--कस्यचित् उच्छिष्टं न दद्यात्, तथा अन्तरा न अद्यात्, अत्यशनं चैव न कुर्यात्, ( किञ्च ) उच्छिष्टः क्वचित् न व्रजेत् ।

व्याख्या--कस्यचित्=कस्मैचिदपि, उच्छिष्टं=भुक्तशेषं न दद्यात् तथा अन्तरा=दिवासायं भोजनमध्ये, न अद्यात्=नाश्नीयात्, अत्यशनं=अधिकभोजनं चैव न कुर्यात्, किञ्च उच्छिष्टः=भोजनान्ते आचमनरहितः, क्वचित् अपि न व्रजेत्=न गच्छेत् ।

**अर्थ**--जूठा किसी को न दे तथा दिन एवं सायंकालीन भोजन के अतिरिक्त पुनः भोजन न करे, अत्यधिक भोजन भी न करे, स्वयं जूठे मुँह कहीं भी न जाय ॥ ५६ ॥

### अधिक भोजन से हानि

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ ५७ ॥

**अन्वय**--अतिभोजनम् अनारोग्यम् अनायुष्यम् अस्वर्ग्यम् अपुण्यं लोकविद्विष्टं च, तस्मात् तत् परिवर्जयेत् ।

**व्याख्या**--अतिभोजनं=अत्यधिकभोजनं [ न आरोग्यम् ] अनारोग्यं=अस्वस्थताकारणं, [ आयुषे हितमायुष्यं, न आयुष्यम् ] अनायुष्यं=आयुःक्षयकारकं, [ स्वर्गाय इदं स्वर्ग्यं, न स्वर्ग्यम् ] अस्वर्ग्यम्=स्वर्गप्राप्तिबाधकम्, अपुण्यं=पापकारणं, [ लोके विद्विष्टं ] लोकविद्विष्टं=लोकनिन्द्यं च भवति, तस्मात् तत्=अतिभोजनं, परिवर्जयेत् = दूरतः त्यजेत् ।

**अर्थ**--अत्यधिक भोजन स्वास्थ्य, आयु, स्वर्ग तथा पुण्य का विनाशक एवं लोकनिन्दित है, इसलिये उसका त्याग कर देना चाहिये ॥ ५७ ॥

### आचमन के योग्य तीर्थ--

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥ ५८ ॥

**अन्वय**—विप्रः ब्राह्मेण तीर्थेन कायत्रैदशिकाभ्यां वा नित्यकालम् उपस्पृशेत् पित्र्येण ( तु ) कदाचन न ( उपस्पृशेत् ) ।

**व्याख्या**—विप्रः=ब्राह्मणः [ ब्रह्मणः इदं ब्राह्मं, तेन ] ब्राह्मेण=ब्राह्मसंज्ञकेन तीर्थेन, कः=प्रजापतिः तस्येदं कायं, त्रिदशानां भवं त्रैदशिकं कायं च त्रैदशिकं चेति कायत्रैदशिके, ताभ्यां ] कायत्रैदशिकाभ्यां=प्राजापत्यदेवतीर्थाभ्यां वा उपस्पृशेत् = आचमनं कुर्यात्, पित्र्येण = तन्नामकेन तीर्थेन तु कदाचन न उपस्पृशेत् ।

**अर्थ**--ब्राह्मण ब्राह्म, प्राजापत्य तथा देवतीर्थ से आचमन करे, परन्तु पितृ तीर्थ से कदापि आचमन न करे ॥ ५८ ॥

### तीर्थों के लक्षण—

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ ५९ ॥

**अन्वय**—अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते, अङ्गुलिमूले कायं, ( अङ्गुलीनाम् ) अग्रे दैवं, तथा तयोः अधः पित्र्यं ( प्रचक्षते ) ।

**व्याख्या**—[ अङ्गुष्ठस्य मूलं, तस्य ] अङ्गुष्ठमूलस्य तले = अङ्गुष्ठाधोभागे, ब्राह्मं =एतन्नामकं तीर्थं, प्रचक्षते, अङ्गुलिमूले-कनिष्ठिकाङ्गुलिमूले कस्येदं कायं प्रचक्षते, अग्रे=अङ्गुल्यग्रे, दैवं=तन्नामकं तीर्थं, तथा तयोः= अङ्गुष्ठप्रदेशिन्योः अधः, यं, [पितुर्भवं] पित्र्यं=तन्नामकं तीर्थं प्रचक्षते ।

**अर्थ**—हाथ के अंगूठे की जड़ से नीचे का भाग ब्रह्मतीर्थ, कनिष्ठिका की जड़ से निचला भाग प्रजापतितीर्थ । अंगुलियों का अग्रभाग देवतीर्थ तथा अंगुष्ठ और तर्जनी के बीच का भाग पितृतीर्थ कहलाता है ॥ ५९ ॥

### आचमन का प्रकार—

त्रिराचमेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥ ६० ॥

**अन्वय**—पूर्वम् अपः त्रिः आचामेत्, ततः द्विः मुखं प्रमृज्यात्, अद्भिः चैव आत्मानं शिरः एव च स्पृशेत् ।

**व्याख्या**—पूर्वम्=आदौ, अपः=जलानि, त्रिः=वारत्रयं, आचामेत्= पिबेत्, ततः=तदनन्तरं, मुखं = आननं; द्वि=वारद्वयं, प्रमृज्यात्=प्रोञ्छेत्= अद्भिः=जलेन, चैव खानि=कर्णाक्षिनासादीनि, आत्मानं=हृदयं शिरः एव स्पृशेत्=प्रमृज्यात् ।

**अर्थ**—सर्व प्रथम जल से तीन बार आचमन करे, फिर दो बार मुख धोवे । तदनन्तर जल से चक्षु, कर्ण, नासिका, मुख, हृदय तथा शिर पर मार्जन करे ॥ ६० ॥

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ।
शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥

**अन्वय**—धर्मवित् शौचेप्सुः एकान्ते प्राक् उदङ्मुखः अनुष्णाभिः अफेनाभिः अद्भिः तीर्थेन सर्वदा आचामेत् ।

व्याख्या—[ धर्मं वेत्तीति ] धर्मवित्=धर्मज्ञः, [ शौचमिच्छतीति ] शौचेप्सुः=शौचमिच्छन्, एकान्ते=रहसि, [ प्राचि, उदीचि वा मुखं यस्य सः ] प्रागुदङ्मुखः उत्तराभिमुखो वा [ न उष्णा अनुष्णास्ताभिः ] अनुष्णाभिः=अतप्ताभिः, अफेनाभिः=फेनरहिताभिः, अद्भिः=जलेन, तीर्थेन=ब्राह्मादितीर्थेन, सर्वदा=नित्यकालं, आचामेत्=आचमनं कुर्यात् ।

अर्थ—पवित्रता की इच्छा रखने वाला धर्मात्मा पुरुष फेनरहित ठंढे जल से एकान्त में पूर्वाभिमुख अथवा उत्तराभिमुख होकर ब्राह्मादि तीर्थों से सर्वदा आचमन करे ॥ ६१ ॥

आचमन के जल का प्रमाण--

हृद्‌गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्‌भिः प्राशिताभिस्तु, शूद्रः स्पृष्टाभिरन्ततः ॥६२॥

अन्वयः—विप्रः हृद्‌गाभिः, भूमिपः तु कण्ठगाभिः, वैश्यः प्राशिताभिः, शूद्रः अन्ततः स्पृष्टाभिः अद्भिः पूयते ।

व्याख्या—विप्रः=द्विजः, [ हृदयं गच्छन्तीति हृद्‌गास्ताभिः ] हृद्‌गाभिः=हृदयगामिनीभिः, भूमिपः=क्षत्रियः तु कण्ठगाभिः=कण्ठस्थानं प्राप्ताभिः, वैश्यः=विट् प्राशिताभिः=आस्यमात्रगताभिः, शूद्रः, अन्ततः स्पृष्टाभिः=जिह्वौष्ठतालुगताभिः, अद्भिः=जलैः, पूयते=पवित्रो भवति ।

अर्थ—ब्राह्मण हृदय तक, क्षत्रिय कण्ठ पर्यन्त, वैश्य मुखमात्र तक तथा शूद्र जिह्वा तथा ओष्ठ मात्र तक आचमन का जल जाने से पवित्र हो जाता है ॥ ६२ ॥

उपवीती आदि के लक्षण—

उद्‌धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥६३॥

अन्वय--द्विजः दक्षिणे पाणौ उद्‌धृते उपवीती इति उच्यते, सव्ये प्राचीन आवीती, कण्ठसज्जने निवीती, इति उच्यते ।

व्याख्या—द्विजः=ब्राह्मणः, दक्षिणे=सव्येतरे, पाणौ=करे, उद्‌धृते=ऊर्ध्वंगते वामस्कंधस्थापिते यज्ञोपवीते इत्यर्थः, उपवीती, इत्युच्यते=इति कथ्यते ।

सव्ये=वामे, पाणावुद्धृते=दक्षिणस्कंधस्थापिते यज्ञोपवीते, प्राचीन आवीती इत्युच्यते, एवं कण्ठगते यज्ञोपवीते निवीती इत्युच्यते ।

**अर्थ**—जब यज्ञोपवीत दाहिने हाथ को उठाकर बायें कन्धेपर रखा जाय तो ब्राह्मण उपवीती, बायें हाथ को उठाकर दाहिने कन्धेपर रखने से प्राचीन आवीती, तथा केवल कण्ठमात्र में रखने से निवीती कहा जाता है ॥६३॥

### नवीन मेखला आदि का ग्रहण विधान--

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥६४॥

**अन्वय**--मेखलाम्, अजिनं, दण्डम्, उपवीतं, कमण्डलुं (एतानि) विनष्टानि अप्सु प्रास्य मन्त्रवत् अन्यानि गृह्णीत ।

**व्याख्या**—मेखलाम्, अजिनं=कृष्णमृगचर्म, दण्डम्=वैणवादिनिर्मितं, उपवीतं=यज्ञोपवीतं, कमण्डलुं, एतानि विनष्टानि=छिन्नभिन्नत्रुटितस्फुटितानि, अप्सु=जले, प्रास्य=प्रक्षिप्य, मंत्रवत्=समन्त्रकम्, अन्यानि=इतराणि, गृह्णीत=धारयेत् ।

**अर्थ**—मेखला, कृष्णमृगचर्म, दण्ड, यज्ञोपवीत तथा कमण्डलु इनके विनष्ट हो जाने पर इन्हें जल में फेंक देना चाहिये, फिर मन्त्रपूर्वक दूसरा धारण करना चाहिये ॥ ६४ ॥

### केशान्त संस्कार का समय--

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ६५ ॥

**अन्वय**--ब्राह्मणस्य षोडशे वर्षे, राजन्यबन्धोः द्वाविंशे, वैश्यस्य ततः द्व्यधिके वर्षे केशान्तः विधीयते ।

**व्याख्या**— ब्राह्मणस्य=विप्रस्य षोडशे वर्षे, राजन्यबन्धोः=क्षत्रियस्य द्वाविंशे, वैश्यस्य=विशः, ततः द्व्यधिके=चतुर्विंशे वर्षे, केशान्तः=तदाख्यः संस्कारः, विधीयते=विधानं क्रियते ।

**अर्थ**—ब्राह्मण का केशान्त संस्कार सोलहवें वर्ष में, क्षत्रिय का २२ वें वर्ष में तथा वैश्य का २४ वें वर्ष में करना चाहिये ॥ ६५ ॥

स्त्रियों के अमन्त्रक संस्कार का विधान--

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ।। ६६ ।।

अन्वय--स्त्रीणां तु इयम् आवृत् अशेषतः यथाकालं यथाक्रमं शरीरस्य संस्कारार्थम् अमन्त्रिका कार्या ।

व्याख्या--स्त्रीणां तु इयम्, आवृत्=संस्कारः, अशेषतः=सम्पूर्ण, [कालमनतिक्रम्येति] यथाकालं=यथावसरं, यथाक्रमं=क्रमानुसारतः, शरीरस्य संस्कारार्थम्=शुद्धये, अमन्त्रिका=मन्त्रं विनैव, कार्या=कर्त्तव्या ।

अर्थ--उपर्युक्त कहे गये सम्पूर्ण संस्कार स्त्रियों के शरीर की शुद्धि के लिये नियत समयपर क्रमानुसार विना मन्त्र के ही करने चाहिये ।।६६।।

स्त्रियों का वैदिक संस्कार--

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ।।६७।।

अन्वय--स्त्रीणां वैवाहिकः विधिः वैदिकः संस्कारः स्मृतः, गुरौ वासः पतिसेवा, अग्निपरिक्रिया गृहार्थः स्मृतः ।

व्याख्या--स्त्रीणां=नारीणां, [विवाहे भवः] वैवाहिकः=विवाहसम्बन्धी विधिः=कर्मानुष्ठानम्, वैदिकः संस्कारः स्मृतः=कथितः, गुरौ=गुरुकुले इत्यर्थः । वासः [पत्युःसेवा] पतिसेवा=पतिपरायणता, अग्निपरिक्रिया=होमः, गृहार्थः=गृहकृत्यम्, स्मृतः=कथितः ।

अर्थ--स्त्रियों का वैवाहिक संस्कार ही वैदिक संस्कार है, पतिसेवा ही गुरुकुल में वास तथा घर के समस्त कृत्य ही उनकी अग्निशुश्रूषा है ।।६७।।

[ अग्निहोत्रस्य शुश्रूषा सायमुद्वासमेव च ।
कार्यं पत्न्या प्रतिदिनमिति कर्म च वैदिकम् ।।७।।]

[ अग्निहोत्र की सेवा तथा सायं-प्रातः पति के कार्यों में सहयोग स्त्रियों को करना चाहिये, यही उनके लिये वैदिक कर्म है ।। ७ ।।

एष प्रोक्तो द्विजातीनामौपनायनिको विधिः ।
उत्पत्तिव्यञ्जकः पुण्यः कर्मयोगं निबोधत ।। ६८ ।।

**अन्वय**—द्विजातीनाम् एषः उत्पत्तिव्यञ्जकः पुण्यः औपनायनिकः विधि प्रोक्तः, कर्मयोगं निबोधत ।

**व्याख्या**—द्विजातीनां=ब्राह्मणादीनां, एषः=पूर्वोक्तः [उत्पत्तिः व्यज्यतेऽनेनेति] उत्पत्तिव्यञ्जकः=द्विजातित्वप्रकाशकः, पुण्यः=पुण्यशीलः, [उपनायनमेव] औपनायनिकः=उपनयनादिसंस्कारः, विधिः=कर्मानुष्ठानं, प्रोक्तः [कर्मणो योगं] कर्मयोगं=कर्त्तव्यानुष्ठानं, निबोधत=शृणुत ।

**अर्थ**—ब्राह्मणादि वर्णों के द्विजातित्वबोधक यज्ञोपवीतादि संस्कार मैंने कहे अब उनके कर्त्तव्यों को सुनो ॥ ६८ ॥

## उपनयनानन्तर कर्तव्य--

उपनीय गुरुः शिष्याः शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ ६९ ॥

**अन्वय**--गुरुः शिष्यम् उपनीय आदितः शौचम् आचारम् अग्निका सन्ध्योपासनम् एव च शिक्षयेत् ।

**व्याख्या**--गुरुः=आचार्यः, शिष्यं=छात्रम्, उपनीय=उपनयनं कृत्वा आदितः=प्रथमं, शौचम्=पवित्रतां, आचारम्=शिष्टव्यवहारं, अग्निकार्यं सायंप्रातर्होमं, सन्ध्योपासनं=प्रातः-मध्याह्न-सायंकालिकं नित्यकृत्यं शिक्षयेत्=आचारयेत् ।

**अर्थ**--आचार्य शिष्य का उपनयन संस्कार कर सर्वप्रथम उसे शौच सदाचार होम और त्रैकालिक सन्ध्योपासनादि कर्मों की शिक्षा दे ॥ ६९ ॥

## वेदाध्ययन की विधि--

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ ७० ॥

**अन्वय**--अध्येष्यमाणः आचान्तः, उदङ्मुखः, ब्रह्माञ्जलिकृतः लघुवास जितेन्द्रियः यथाशास्त्रम् अध्याप्यः ।

**व्याख्या**—[अध्येतुमिष्यमाणः] अध्येष्यमाण=पठिष्यमाणः, आचान्त विहिताचमनः, [उदङ् मुखं यस्य सः] उदङ्मुखः=उत्तराशामुखः, [ब्रह्माञ्जि कृतो येन सः] ब्रह्माञ्जलिकृतः=विहितसंहतहस्तः, [ लघु वासः यस्य सः

लघुवासाः=कौपीनाच्छादनः [ जितानि इन्द्रियाणि येन सः ] जितेन्द्रियः=
वशी, ( शिष्यः ) [ अध्यापयितुं योग्यः ] अध्याप्यः=पाठ्यः ।

अर्थ—अध्ययन की इच्छा से आया हुआ, आचमन कर उत्तराभिमुख ब्रह्माञ्जलि पूर्वक बैठा हुआ, कौपीन को धारण करने वाला तथा जितेन्द्रिय शिष्य ही पढ़ाने योग्य है ॥ ७० ॥

ब्रह्माञ्जलिका लक्षण—

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥

अन्वय—ब्रह्मारम्भे अवसाने च गुरोः पादौ सदा ग्राह्यौ, हस्तौ संहत्य अध्येयं, हि सः ब्रह्माञ्जलिः स्मृतः ।

व्याख्या—[ ब्रह्मणः आरम्भः ब्रह्मारम्भस्तस्मिन् ] ब्रह्मारम्भे=वेदाध्ययनादौ, अवसाने = वेदाध्ययनान्ते च, गुरोः=आचार्यस्य, पादौ=चरणौ, ग्राह्यौ=गृहीतव्यौ, हस्तौ=करौ, संहत्य=बद्ध्वा संश्लिष्य, अध्येयं=पठनीयम्, हि=निश्चयेन, सः, ब्रह्माञ्जलिः=वेदाध्ययने विहिताञ्जलिः स्मृतः=उक्तः ।

अर्थ—ब्रह्मचारी, वेदाध्ययनके आरम्भमें, तथा अन्तमें गुरुके चरणोंका स्पर्श करे, वेदाध्ययन कालमें दोनों हाथोंको जोड़ लेना चाहिये, क्योंकि उसे ही ब्रह्माञ्जलि कहते हैं ॥ ७१ ॥

गुरुके अभिवादनकी विधि—

व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ ७२ ॥

अन्वय—व्यत्यस्तपाणिना, गुरोः उपसङ्ग्रहणं कार्यं, सव्येन सव्यः दक्षिणेन च दक्षिणः ( पादः ) स्प्रष्टव्यः ।

व्याख्या—[ व्यत्यस्तौ पाणी यस्य सः व्यत्यस्तपाणिस्तेन ] व्यत्यस्तपाणिना=परिवर्तितकरेण, गुरोः = आचार्यस्य, उपसङ्ग्रहणं=पादवन्दनं, कार्यं=कर्त्तव्यम्, सव्येन = वामेन हस्तेन, सव्यः = वामपादः, दक्षिणेन = दक्षिणकरेण, दक्षिणः = दक्षिणश्चरणः स्प्रष्टव्यः=ग्राह्यः ।

**अर्थ**--ब्रह्मचारी हाथोंको परिवर्त्तितकर गुरुको प्रणाम करे अर्थात् बा हाथसे गुरुका बांया पैर तथा दाहिने हाथसे दाहिना पैर स्पर्श करे ॥ ७२ ॥

अध्ययनारम्भ तथा विराम विधि--

अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥ ७३ ॥

**अन्वय**--गुरुः तु नित्यकालं अतन्द्रितः ( सन् ) अध्येष्यमाणं 'भो अधीष्व' इति ब्रूयात्, 'विरामः अस्तु' इति च आरमेत् ।

**व्याख्या**--गुरुः=आचार्यः, नित्यकालं=सर्वदैव, अतन्द्रितः, = आलस्य रहितः सन्, [ अध्येष्यते इति ] अध्येष्यमाणं=पठिष्यमाणं ( शिष्यं ) अधीष्व = भो पठ, इति ब्रूयात्=कथयेत्, विरामः = अवसानः, अस्तु भव इति च आरमेत्=निवर्त्तयेत् ।

**अर्थ**—गुरु पढ़ने के लिये आये हुए शिष्यको सदा ही प्रारम्भमें अत्य सावधानीसे 'भो अधीष्व' ऐसा कहे, तथा 'विरामोऽस्तु' ऐसा कहकर प समाप्त करे ॥ ७३ ॥

आद्यन्तमें प्रणवका उच्चारण—

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति ॥ ७४ ॥

**अन्वय**--ब्रह्मणः आदौ अन्ते च सर्वदा प्रणवं कुर्यात् ( यतः ) पूर्व अनोङ्कृतं स्रवति, पुरस्ताच्च विशीर्यति ।

**व्याख्या**--ब्रह्मणः=वेदस्य, आदौ=आरम्भकाले, अन्ते=वेदपाठसमा काले च सर्वदा = नित्यं, प्रणवं=ॐकारोच्चारणं, कुर्यात्-विदधीत, ( यत अनोङ्कृतं=ॐकारोच्चारणरहितं, ( वेदाध्ययनं ) स्रवति = विनश्यति, पु स्ताच्च=वेदाध्ययनसमाप्तौ, च ( अनोङ्कृतं ) विशीर्यति=विस्मृतिं गच्छ

**अर्थ**-ब्रह्मचारीको वेदारम्भ तथा समाप्ति कालमें प्रणवका उच्चारण कर चाहिये, क्योंकि वेदारम्भमें प्रणवका उच्चारण न करनेसे वेदज्ञान विनष्ट जाता है तथा अन्तमें प्रणवका उच्चारण न करनेसे विस्मृत हो जाता है ॥७

### प्रणवोच्चारण की योग्यता—

प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥५७॥

अन्वय--प्राक कूलान् पर्युपासीनः, पवित्रैः, त्रिभिः प्राणायामैः पूतः, तः ॐकारम् अर्हति ।

व्याख्या—[ प्राक् कूलं येषां ते प्राक्कूलास्तान् ] प्राक्कूलान्=पूर्वाग्रान्, कुशान् ) पर्युपासीनः=आस्थितः, पवित्रैः=दर्भनिर्मितैः चैव, पावितः= वित्रीकृतः, त्रिभिः=त्रिसंख्याकैः, प्राणायामैः, पूतः=शुद्धः सन्, ततः=तद- न्तरं, ॐकारं प्रणवं, अर्हति=योग्यो भवति ।

अर्थ—पूर्वाग्र भागवाले कुशोंपर बैठकर, कुशा की पवित्री से पवित्र होकर था तीन प्राणायाम से शुद्ध होने पर प्रणवोच्चारण की योग्यता होती ॥७५॥

### प्रणव तथा व्याहृतियों की उत्पत्ति—

अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च ॥७६॥

अन्वय—प्रजापतिः अकारं, उकारं, मकारम् इति, भूः भुवः स्वः इति च दत्रयात् निरदुहत् ।

व्याख्या—[ प्रजानां पतिः ] प्रजापतिः=ब्रह्मा, अकारं, उकारं, मकारं =ॐकारमित्यर्थः, इति भूः भुवः, स्वः महाव्याहृतयः इति च [ वेदानां त्रयं दत्रयं, तस्मात् ] वेदत्रयात्=ऋग्यजुःसामलक्षणात्, निरदुहत्=दुदोह ।

अर्थ—प्रजापति ने अकार, उकार तथा मकार इन वर्णों को एवं भूः वः स्वः इन महाव्याहृतियों को तीनों वेदों से स्वयं निकाला है ॥७६॥

### सावित्री की उत्पत्ति—

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥७७॥

अन्वय—परमेष्ठी प्रजापतिः त्रिभ्यः एव वेदेभ्यः अस्याः तदित्यृचः ावित्र्याः पादं पादं अदूदुहत् ।

**व्याख्या**--[ परमे तिष्ठतीति ] परमेष्ठी=सृष्टिकर्त्ता, प्रजापतिः = ब्रह्म
त्रिभ्यः एव वेदेभ्यः=ऋग्यजुःसामलक्षणेभ्यः, अस्याः [ तद् इति ऋक् यस्य
सा तस्याः ] तदित्यृचः=तदादिऋचः, सावित्र्याः=गायत्र्याः 'तत् सवितु
रेण्य'' 'भर्गो देवस्य धीमहि' 'धियो यो नः प्रचोदयात्' इति त्रिपादभूताय
इत्यर्थः। पादं पादं=त्रीन् पादान् अदूदुहत्=दुदोह।

**अर्थ**—प्रजापति ब्रह्मा ने तीनों वेदों से ( १ ) तत् सवितुर्वरेण्यं, (
भर्गो देवस्य धीमहि, (३) धियो यो नः प्रचोदयात्, इस त्रिपादात्मक गाय
के तीन पादों को स्वयं निकाला है ।।७७।।

सावित्री जप का फल—

एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ।।७८।।

**अन्वय**—वेदवित् विप्रः एतद् अक्षरं, व्याहृतिपूर्विकां एतां च सन्ध्य
जपन् वेदपुण्येन युज्यते।

**व्याख्या**—[ वेदं वेत्तीति ] वेदवित्=वेदज्ञः, विप्रः=ब्राह्मणः, ए
अक्षरं=प्रणवस्वरूपं, [ महाव्याहृतयः पूर्वं यस्याः सा महाव्याहृतिपूर्विका ता
महाव्याहृतिपूर्विकां=भूर्भुवःस्वरितिपूर्विकां, एतां=गायत्रीं च, सन्ध्ययोः
प्रातःसायङ्कालयोः, जपन्=जपं कुर्वन्, [ वेदस्य पुण्यं वेदपुण्यं तेन ] वे
पुण्येन=वेदाध्ययनफलेन, युज्यते=युक्तो भवति।

**अर्थ**—वेदज्ञ ब्राह्मण प्रणव एवं महाव्याहृति से युक्त इस गायत्री को द
काल की सन्ध्या में जप करने से वेदाध्ययन के फल को प्राप्त करता है ।।७

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ।।७९।।

**अन्वय**—द्विजः एतत् त्रिकं बहिः सहस्रकृत्वः मासात् अभ्यस्य म
अपि एनसः त्वचा अहिः इव विमुच्यते।

**व्याख्या**--द्विजः=ब्राह्मणः, एतत् त्रिकं=प्रणवं महाव्याहृतिं गाय
च, बहिः=ग्रामाद् बहिः नदीतटादौ, सहस्रकृत्वः=सहस्रसंख्यापर्यन्तं, मासा
केवलं मासपर्यन्तं, अभ्यस्य=जप्त्वा, महतः अपि एनसः=पापात्, त
अहिः=सर्पं इव, मुच्यते=मुक्तो भवति।

अर्थ--ब्राह्मण प्रणव महाव्याहृति तथा गायत्री को गाँव के बाहर मास र्यन्त १ हजार बार जपकर बहुत बड़े-बड़े पापों से इसी प्रकार मुक्त हो जाता जिस प्रकार केंचुलेसे साँप छूट जाता है ॥ ७९ ॥

जप न करने पर दोष--

एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥

अन्वय--एतया ऋचा, काले स्वयं क्रियया विसंयुक्तः च ब्रह्मक्षत्रियविड्- ोनिः साधुषु विगर्हणां याति ।

व्याख्या--एतया ऋचा=प्रणवमहाव्याहृतिसहितया गायत्र्या, काले= न्ध्यासु,स्वया=निजया, क्रियया=कर्मणा, विसंयुक्तः=विप्रयुक्तः, च, [ ब्रह्म क्षत्रियश्च, विट् चेति ब्रह्मक्षत्रियविशः, तेषां योनिः ] ब्रह्मक्षत्रियविड्योनिः= ाह्मणक्षत्रियवैश्यकुलोत्पन्नः, साधुषु = सज्जनेषु, विगर्हणां = निन्दां, = याति= प्नोति ।

अर्थ--प्रणव महाव्याहृतिपूर्वक गायत्री का जप न करने से तथा समय र स्व-स्व-वर्णाश्रमानुसार नित्यकर्मादिके भी न करने से ब्राह्मण, क्षत्रिय तथा ्य सज्जनों में निन्दनीय हो जाते हैं ॥ ८० ॥

प्रणव आदि की प्रशंसा--

ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ८१ ॥

अन्वय--ॐकारपूर्विकाः अव्ययाः तिस्रः महाव्याहृतयः त्रिपदा सावित्री ब्रह्मणः मुखं विज्ञेयम् ।

व्याख्या--[ॐकारः पूर्वो यासां ताः ] ॐकारपूर्विकाः=प्रणवसंयुक्ताः, ययाः तिस्रः=त्रिसंख्याकाः महाव्याहृतयः=भूभुर्वःस्वःस्वरूपाः, [ त्रयः ा यस्याः सा ] त्रिपदा सावित्री=चैव, ब्रह्मणः=वेदस्य, मुखं=आननं, ेयं=ज्ञातव्यम् ।

अर्थ--प्रणव तथा महाव्याहृति से संयुक्त त्रिपदा गायत्री वेद का मुख है ा जानना चाहिये ॥ ८१ ॥

योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ ८२ ॥

अन्वय--यः अतन्द्रितः अहनि अहनि एतान् त्रीणि वर्षाणि अधीते वायुभूतः खमूर्त्तिमान् परं ब्रह्म अभ्येति ।

व्याख्या--यः=द्विजातिः, अतन्द्रितः=समाहितः, अहनि अहनि प्रतिदिनं, एतान्=प्रणवमहाव्याहृतिगायत्रीमन्त्रान्, त्रीणि वर्षाणि अधीते जपति, सः, वायुभूतः=वायुरिव, [ खं मूर्त्तिरस्यास्तीति ] खमूर्त्तिमान्= स्वरूपः सन्, परं ब्रह्म=सच्चिदानन्दस्वरूपं, अभ्येति=प्राप्नोति ।

अर्थ--जो ब्राह्मण अत्यन्त सावधानी से तीन वर्ष तक निरन्तर प्रकार गायत्री का जप करता है, वह वायु के समान ब्रह्म स्वरूप होकर ब्रह्म में लीन हो जाता है ॥ ८२ ॥

एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ ८३ ॥

अन्वय--एकाक्षरं परं ब्रह्म, प्राणायामाः परं तपः, सावित्र्याः तु (अन्यत्) नास्ति, मौनात् सत्यं विशिष्यते ।

व्याख्या—एकाक्षरं=प्रणवात्मकं, परं ब्रह्म (अस्ति) प्राणायामाः, उत्कृष्टं तपः, सावित्र्याः=गायत्र्याः, परम्=उत्कृष्टं अन्यत् नास्ति, मौन वाणीसंयमनात् सत्यं, विशिष्यते=विशिष्टं भवति ।

अर्थ--ॐ यह एकाक्षर ही पर ब्रह्म है, प्राणायाम ही सबसे बड़ी त है, गायत्री से बढ़कर दूसरा मन्त्र नहीं है तथा मौन की अपेक्षा सत्य है ॥ ८३ ॥

क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः ।
अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः ॥ ८४ ॥

अन्वय—सर्वाः वैदिक्यः जुहोतियजतिक्रियाः क्षरन्ति अक्षरं तु ज्ञेयं च ब्रह्म एव प्रजापतिः इति विद्धि ।

व्याख्या—सर्वाः=सकलाः, [ वेदे भवाः ] वैदिक्यः=वेदनि जुहोति-यजतिक्रियाः=होमयागादिकर्माणि, क्षरन्ति=विनश्यन्ति, अक्षरं= दुष्करं=नाशरहितं, ज्ञेयं च, ब्रह्म एव प्रजापतिः, इति विद्धि=जानीहि च ।

**अर्थ**— वेदप्रतिपादित सभी होम यागादि कर्म विनाशशील हैं, किंतु प्रणवको परब्रह्म स्वरूप, प्रजापति और अविनाशी जानना चाहिये ॥८४॥

मानस जपकी श्रेष्ठता--

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।**
**उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥८५॥**

**अन्वय**--विधियज्ञात् जपयज्ञः दशभिः गुणैः विशिष्टः (स्यात्), उपांशुः शतगुणैः ( विशिष्टः ) स्यात्, मानसः साहस्रः स्यात् ।

**व्याख्या**—विधियज्ञात् दर्शपौर्णमासादियागात्, जपयज्ञ:=प्रणवगायत्रीरूपात्मकः, यज्ञः, दशभिः-दशसंख्याकैः, गुणैः विशिष्टः = अधिकतरः, तस्मात् उपांशुः=तन्नामकः जपः, शतगुणैः = शतावृत्तैः विशिष्टः स्यात्, ( तस्माच्च ), मानसः=मानसजपः, साहस्रः-सहस्रगुणितः, स्यात् ।

**अर्थ**--दर्श-पौर्णमासादियज्ञों से जपयज्ञ दशगुना बड़ा होता है । जपयज्ञ से उपांशुयज्ञ सौगुना, तथा उपांशुसे मानस यज्ञ सहस्रगुना श्रेष्ठ कहा गया है ॥८५॥

जप यज्ञकी महिमा—

**ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।**
**सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥८६॥**

**अन्वय**—विधियज्ञसमन्विताः ये चत्वारः पाकयज्ञाः ते सर्वे जपयज्ञस्य षोडशीं कलां न अर्हन्ति ।

**व्याख्या**—[ विधियज्ञेन समन्विताः ] विधियज्ञसमन्विताः=दर्शपौर्णमासादिसहिताः ये चत्वारः पाकयज्ञाः-बलिवैश्वदेवनित्यश्राद्धातिथिभोजनानि, ते सर्वे जपयज्ञस्य षोडशीं कलां=फलेन षोडशांशमपि, न अर्हन्ति=योग्या न भवन्ति ।

**अर्थ** --विधियज्ञ के सहित किया गया बलि वैश्वदेव, नित्यकर्म, तथा अतिथिभोजन रूप पाकयज्ञ जययज्ञ के सोलहवें भाग के भी बराबर नहीं होते ॥८६॥

**जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥८७॥**

अन्वय—ब्राह्मणः तु जप्येनैव संसिध्येत्, अत्र संशयः न अन्यत् कुर्यात् न वा कुर्यात्, मैत्रः ब्राह्मणः उच्यते ।

व्याख्या- ब्राह्मणः=विप्रः, जप्येनैव=गायत्रीजपेनैव, संसिध्येत्=सिद्धो भवति, अत्र=अस्मिन् कर्मणि, संशयः=सन्देहः न । अन्यत्=यजति-जुहोत्यादि कर्म कुर्यात् न वा कुर्यात्, [मित्रे भवः] मैत्रः=सर्वभूतदयापरः ब्राह्मणः उच्यते=कथ्यते ।

अर्थ - ब्राह्मण जप-यज्ञ से ही सिद्ध होता है इसमें सन्देह नहीं है वह चाहे अन्य वैदिक कर्म करे या न करे । जो समस्त प्राणियों पर दया करता है, वह ब्राह्मण कहा जाता है ॥८७॥

इन्द्रिय-संयम—

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥८८॥

अन्वय—विद्वान् अपहारिषु विचरताम् इन्द्रियाणां संयमे, यन्ता वाजिनाम् इव, यत्नम् आतिष्ठेत् ।

व्याख्या—विद्वान्=प्राज्ञः, [अपहर्त्तुं शीलं येषां ते अपहारिणस्तेषु] अपहारिषु=मनोहरेषु, विषयेषु=रूपगन्धादिषु, विचरतां=गच्छतां, इन्द्रियाणां=चक्षुरादीनां, संयमे=निग्रहे, यन्ता=सारथिः, वाजिनां=अश्वानां निग्रहे इव, यत्नम्=उपायम्, आतिष्ठेत्=कुर्यात् ।

अर्थ—विद्वान् पुरुष मनको हरण करनेवाले विषयों में विचरण करनेवाले इन्द्रियोंका उसी प्रकार निग्रह करे, जिस प्रकार चतुर सारथी इधर-उधर बहकने वाले घोड़ों को अपने वश में रखता है ॥८८॥

एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ।
तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः ॥८९॥

अन्वय—पूर्वे मनीषिणः यानि एकादश इन्द्रियाणि आहुः तानि यथावत् अनुपूर्वशः सम्यक् प्रवक्ष्यामि ।

व्याख्या—पूर्वे प्राचीनाः मनीषिणः=विद्वांसः, यानि एकादश इन्द्रियाणि आहुः=कथयन्ति, तानि, यथावत्=याथातथ्येन, अनुपूर्वशः=यथाक्रमम्, सम्यक् =सुष्ठु प्रकारेण, प्रवक्ष्यामि=कथयिष्यामि ।

अर्थ--पूर्वकालमें होने वाले विद्वानोंने, जिन ग्यारह इन्द्रियोंको कहा है उन्हें क्रमसे भलीभाँति आगे कहता हूँ ॥ ८९ ॥

दश इन्द्रियोंकी संज्ञा--

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥ ९० ॥

अन्वय--श्रोत्रं, त्वक्चक्षुषी, जिह्वा, पञ्चमी नासिका चैव, पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ।

व्याख्या—श्रोत्रं=कर्णद्वयं, त्वक्=चर्म, चक्षुषी=नेत्रे, जिह्वा=रसना, पञ्चमी=पञ्चसंख्यापूरणी, [ नासा एव] नासिका=घ्राणेन्द्रियं चैव, [पायुश्च उपस्थश्चानयोः समाहारः ] पायूपस्थं=गुदलिंगं [ हस्तौ च पादौ चानयोः समाहारः ] हस्तपादं=करचरणं, चैव दशमी=दशसंख्यापूरणी, वाक्=मुखं चैव स्मृता=कथिता ।

अर्थ—(१) दोनों कान, (२) त्वग्, (३) दोनों नेत्र, (४) जीभ तथा (५) नाक, (६) गुद, (७) उपस्थ, (८) दोनों हाथ, (९) दोनों पैर तथा (१०) मुख, ये दश इन्द्रियाँ हैं ॥ ९० ॥

ज्ञानेन्द्रिय-कर्मेन्द्रिय रूपसे विभाग—

बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥ ९१ ॥

अन्वय—एषां अनुपूर्वशः श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि तथा पाय्वादीनि पञ्च कर्मेन्द्रियाणि प्रचक्षते ।

व्याख्या—एषाम्=पूर्वोक्तानां दशेन्द्रियाणां मध्ये, अनुपूर्वशः=क्रमशः, श्रोत्रादीनि,=श्रवणादीनि, पञ्च, बुद्धीन्द्रियाणि=ज्ञानेन्द्रियाणि, तथा एषां पाय्वादीनि=गुदादीनि, पञ्च कर्मेन्द्रियाणि=क्रियाशीलेन्द्रियाणि, प्रचक्षते=उक्ताः भवन्ति ।

अर्थ—पूर्वोक्त कही गयी दश इन्द्रियोंमें श्रोत्रादि पाँच ज्ञानेन्द्रियाँ हैं, तथा पायु उपस्थ आदि पाँच कर्मेन्द्रियाँ हैं ॥ ९१ ॥

### ग्यारहवीं इन्द्रिय मन--

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ ।। ९२ ।।

**अन्वय**—स्वगुणेन उभयात्मकं एकादशं मनः ज्ञेयम्, यस्मिन् जिते एतौ पञ्चकौ गणौ जितौ भवतः ।

**व्याख्या**—[ स्वस्य गुणः स्वगुणस्तेन ] स्वगुणेन = ज्ञानक्रियानिष्ठत्वेन, उभयात्मकं = ज्ञानक्रियात्मकं, एकादशं = एकादशसंख्यापूरणात्मकं, मनः = सङ्कल्पविकल्पात्मकं चेतः, ज्ञेयम् = ज्ञातव्यम्, यस्मिन् = मनसि, जिते = वशीकृते, एतौ पञ्चकौ गणौ = ज्ञानक्रियात्मकौ, जितौ = वशीकृतौ भवतः ।

**अर्थ**—ज्ञानशील तथा क्रियाशील दोनों होनेके कारण मनको ११ वीं इन्द्रिय समझना चाहिये, इस मनको, वशमें कर लेनेसे उपर्युक्त ज्ञानेन्द्रियाँ तथा कर्मेन्द्रियाँ स्वभावसे ही वशमें हो जाती हैं ।। ९२ ।।

### इन्द्रियसंयम से सिद्धि--

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति ।। ९३ ।।

**अन्वय**—(जनः) इन्द्रियाणां प्रसङ्गेन असंशयं दोषम् ऋच्छति, तान्येव सन्नियम्य ततः सिद्धिं नियच्छति ।

**व्याख्या**—इन्द्रियाणां = पूर्वोक्तानां, प्रसङ्गेन = प्रसक्त्या, असंशयम् = निस्सन्देहम्, दोषं = कामादिविकारं, ऋच्छति = प्राप्नोति, तान्येव = इन्द्रियाण्येव, सन्नियम्य = वशीकृत्य, ततः = तदनन्तरं, सिद्धिं = अणिमादिकं, नियच्छति = प्राप्नोति ।

**अर्थ**—मनुष्य, इन्द्रियों के वश में होने से निश्चय ही कामादि दोषों से दूषित हो जाता है, परन्तु उन्हीं इन्द्रियों को वश में कर लेने से निश्चय ही सिद्धि को प्राप्त करता है ।। ९३ ।

### विषयों के उपभोग से इच्छा शान्त नहीं होती--

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।। ९४ ।।

अन्वय—कामः कामानाम् उपभोगेन जातु न शाम्यति, हविषा कृष्णवर्त्मा इव भूय एव अभिवर्धते ।

व्याख्या—कामः मनसोऽभिलाषः, कामानाम् = विषयाणां, उपभोगेन = आस्वादेन, जातु = कदाचिदपि, न शाम्यति = शान्ति न याति ( किन्तु ) हविषा = घृतादिना, कृष्णवर्त्मा = अग्निः, इव भूयः = पौनःपुन्येन, अभिवर्धते एव = विवर्धते एव ।

अर्थ—कामना विषयों के उपभोग से कभी तृप्त नहीं होती, बल्कि घृत की आहुति देने से जिस प्रकार अग्नि बढ़ती है उसी प्रकार विषयों के उपभोग से वह बढ़ती ही है ॥ ९४ ॥

विषयों की उपेक्षा से शान्ति—

यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ९५ ॥

अन्वय—यः च सर्वान् एतान् प्राप्नुयात्, यः च एतान्, ( सर्वान् ), केवलान् त्यजेत् ( उभयोः ) सर्वकामानां प्रापणात् परित्यागः विशिष्यते ।

व्याख्या—यः = पुरुषः, एतान् = पूर्वोक्तान् तत्तदिन्द्रियविषयान्, प्राप्नुयात् = उपभुञ्जीत, यश्च, एतान् सर्वान् कामान् केवलान्, त्यजेत् = उपभोगान् उपेक्षेत, ( अत्रोभयोः ) सर्वकामानां = सर्वविषयाणां, प्रापणात् = उपभोगात्, परित्यागः = विषयसंसर्गराहित्यं, विशिष्यते = अधिको भवति ।

अर्थ—जो मनुष्य सम्पूर्ण विषयों के सुख को प्राप्त करता है और जो इन समस्त विषय-सुखों का त्याग करता है, उन दोनों में, विषयों के उपभोग करनेवाले की अपेक्षा विषयों का त्याग कनेवाला श्रेष्ठ कहा गया है ॥ ९५ ॥

इन्द्रिय-संयम के उपाय—

न तथैतानि शक्यन्ते सन्नियन्तुमसेवया ।
विषयेषु प्रजुष्टानि तथा ज्ञानेन नित्यशः ॥ ९६ ॥

अन्वय—विषयेषु प्रजुष्टानि एतानि असेवया सन्नियन्तुं तथा न शक्यन्ते यथा नित्यशः ज्ञानेन ( नियन्तुं ) शक्यन्ते ।

व्याख्या—विषयेषु = रूपरसादिषु, प्रजुष्टानि = प्रीत्या प्रसक्तानि, एतानि = एकादशेन्द्रियाणि, [ न सेवया ] असेवया = असेवनेन तथा = अन्यप्रकारेण, सन्नियन्तुं = वशीकर्तुं, न शक्यन्ते = यथा नित्यशः ज्ञानेन सन्नियन्तुं शक्यन्ते ।

**अर्थ**—नित्यप्रति विषयों के सेवन में लगी हुई इन्द्रियाँ जिस प्रकार ज्ञान से रोकी जा सकती हैं वैसे अन्य प्रकार के साधनों से नहीं ॥ ९६ ॥

मन के संयम के विना सिद्धि नहीं—

वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥ ९७ ॥

**अन्वय**—विप्रदुष्टभावस्य वेदाः त्यागः यज्ञाः नियमाः तपांसि च कर्हिचित् सिद्धिं न गच्छन्ति ।

**व्याख्या**—[ विशेषेण प्रदुष्टः भावो यस्य सः, तस्य ] विप्रदुष्टभावस्य = भावदूषितस्य, वेदः = वेदाध्ययनम्, त्यागः = दानम्, यज्ञाः = यागादयः, नियमाः = व्रतादिनियमाः, तपांसि = तपस्याचरणानि, कर्हिचित् = कदाचिदपि, सिद्धिं न गच्छन्ति = न प्राप्नुवन्ति ।

**अर्थ**—दुष्ट भावना से किये गये वेदाध्ययन, त्याग, यज्ञ, नियम तथा तप मनुष्यको कदापि सिद्धि नहीं देते ॥ ९७ ॥

जितेन्द्रिय का स्वरूप--

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ९८ ॥

**अन्वय**—यः नरः, श्रुत्वा, स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च न हृष्यति न ग्लायति, स जितेन्द्रियः ज्ञेयः ।

**व्याख्या**---यः नरः = जनः, श्रुत्वा = मधुरं कर्णकटुशब्दं वा श्रुत्वा, स्पृष्ट्वा = कोमलकठिनादिवस्तुजातं संस्पृश्य, दृष्ट्वा = सुरूपकुरूपादिकमवलोक्य, भुक्त्वा = स्वादु नीरसं वा खादित्वा, घ्रात्वा = सुगन्धदुर्गन्धादिकमाघ्राय, न हृष्यति = प्रसन्नतां न याति, ग्लायति = न च विषीदति, सः [ जितानीन्द्रियाणि यस्य सः ] जितेन्द्रियः = वशी, विज्ञेयः = ज्ञातव्यः ।

**अर्थ**--जो मनुष्य सुनकर, स्पर्शकर, देखकर, भोजन कर तथा सूँघकर न तो प्रसन्न होता है और न दुःखी ही होता है, उसे जितेन्द्रिय समझना चाहिये ॥ ९८ ॥

## असंयम से बुद्धि का क्षय

इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥९९॥

अन्वय—सर्वेषां तु इन्द्रियाणां (मध्ये) यदि एकम् इन्द्रियं क्षरति तेन अस्य दृतेः पात्रात् उदकम् इव प्रज्ञा क्षरति।

व्याख्या—सर्वेषाम्=एकादशेन्द्रियाणां (मध्ये) यदि एकम् इन्द्रियं-चक्षुरादिकम् क्षरति=च्यवति, तेन अस्य, दृतेः=चर्मपात्रात् ("मशक" इति भाषायाम्) उदकम्=जलमिव, प्रज्ञा=बुद्धिः, क्षरति=नश्यति।

अर्थ--इन सभी एकादश इन्द्रियों के बीच में यदि एक भी इन्द्रिय विषय में प्रसक्त हो गई तो मनुष्य की बुद्धि उसी प्रकार नष्ट हो जाती है जिस प्रकार मशक में रखा हुआ जल चू जाता है ॥९९॥

## इन्द्रियसंयम को पुरुषार्थहेतुता—

वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥१००॥

अन्वय- इन्द्रियग्रामं वशे कृत्वा तथा मनः संयम्य योगतः तनुं अक्षिण्वन् सर्वान् अर्थान् संसाधयेत्!

व्याख्या --[इन्द्रियाणां ग्रामम्] इन्द्रियग्रामम्=इन्द्रियसमूहं, वशे कृत्वा संयम्य तथा मनः=चित्तं संयम्य=वशे कृत्वा, योगतः=कर्मकौशलतः, तनुं=शरीरम् अक्षिण्वन्=संरक्षन् सर्वान् अर्थान्=अर्थधर्मकाममोक्षादीन्, संसाधयेत्=प्राप्नुयात्।

अर्थ—समस्त इन्द्रियों एवं मन को वश में रखकर योगद्वारा शरीर का संरक्षण करता हुआ मनुष्य धर्म, अर्थ, काम तथा मोक्षादि पदार्थों को प्राप्त करे ॥१००॥

## सन्ध्योपासन का काल—

पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात्।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥१०१॥

**अन्वय**––आ अर्कदर्शनात् पूर्वां सन्ध्यां सावित्रीं जपन् तिष्ठेत्, आ ऋक्ष-विभावनात् पश्चिमां सम्यक् समासीनः ( सावित्रीं जपन् ) तिष्ठेत् ।

**व्याख्या**––आ अर्कदर्शनात्=सूर्योदयपर्यन्तं, पूर्वां=प्रातःकालीनां, सन्ध्यां, सावित्रीं=गायत्रीं जपन्=अभ्यसन्, तिष्ठेत्=स्थितिं कुर्यात्, आ ऋक्ष-विभावनात् [ ऋक्षाणां विभावनं, तस्मात् ]=तारकादर्शनपर्यन्तं, पश्चिमां–सायङ्कालीनां (सन्ध्यां) सम्यक्=सुष्ठुप्रकारेण समासीनः=उपविष्टः (सावित्रीं जपन्) तिष्ठेत् ।

**अर्थ**—प्रातःकाल के समय सूर्योदय पर्यन्त खड़े होकर गायत्री का जप करना चाहिये, तथा सायङ्काल के समय तारे निकलने तक बैठकर गायत्री का जप करना चाहिये ॥१०१॥

सन्ध्योपासन से पापनाश—

पूर्वां सन्ध्यां जपंस्तिष्ठेन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥१०२॥

**अन्वय**––पूर्वां सन्ध्यां जपन् तिष्ठेत् (चेत्) नैशम् एनः व्यपोहति, पश्चिमां तु समासीनः दिवाकृतं मलं हन्ति ।

**व्याख्या**––पूर्वां सन्ध्यां=प्रातःकाले, गायत्रीं जपन्=अभ्यसन् तिष्ठेत् (चेत्) [निशायां भवं] नैशं=रात्रिकृतम्, एनः=पापं व्यपोहति=नाशं करोति, पश्चिमां तु=सायङ्काले, समासीनः=उपविष्टः दिवाकृतं=दिनसञ्चितं मलं=पापं हन्ति=विनाशयति ।

**अर्थ**—प्रातः काल में गायत्री का जप करने से रात्रि का (कायिक, वाचिक, मानसिक तथा सांसर्गिक) पाप नष्ट होता है तथा सायङ्काल में बैठकर गायत्री का जप करने से दिन में किया गया पाप नष्ट हो जाता है ॥१०२॥

संध्याहीन का बहिष्कार––

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥१०३॥

**अन्वय**–यः तु पूर्वां सन्ध्यां न तिष्ठति यः च पश्चिमां न उपास्ते सर्वस्मात् द्विजकर्मणः शूद्रवत् बहिष्कार्यः ।

व्याख्या—यः = पुरुषः, तु = पुनः, पूर्वां = प्रातःकालीनां, (सन्ध्यां) न तिष्ठति = न करोति, यः च पश्चिमां = सायंकालीनां सन्ध्यां न उपास्ते = न सेवते, सः = द्विजः, सर्वस्मात् = निखिलात्, [द्विजस्य कर्म द्विजकर्म तस्मात्] द्विजकर्मणः = ब्राह्मणधर्मात्, बहिष्कार्यः = निःसारणीयः ।

अर्थ—जो द्विज प्रातःकाल तथा सायंकाल की सन्ध्या नहीं करता उसे समस्त ब्राह्मकर्म धर्मों से बाहर कर देना चाहिए ॥१०३॥

सावित्री मात्र का जपविधान–

अपां समीपे नियतो नैत्यिकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥१०४॥

अन्वय—अरण्यं गत्वा समाहितः अपां समीपे नैत्यिकं विधिम् आस्थितः नियतः सावित्रीम् अपि अधीयीत ।

व्याख्या—अरण्यं = वनं, गत्वा, अपां समीपे = जलसन्निधौ, [नित्ये भवं] नैत्यिकं = नित्यभवं, विधिं = अनुष्ठानम्, आस्थितः = विहितः, नियतः = नियमेन, सावित्रीं = गायत्रीं, अपि अधीयीत = अभ्यसेत् )

अर्थ—मनुष्य को एकान्त स्थल में जाकर जल के समीप नित्यकर्म (शौच, स्नान, सन्ध्यादि) सम्पादन कर नियम से गायत्री का जप करना चाहिये ॥१०४॥

अनध्याय में भी अवर्जनीय--

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥१०५॥

अन्वय--वेदोपकरणे च एव, नैत्यिके स्वाध्याये च एव, होममन्त्रेषु च एव, अनध्याये अनुरोधः नास्ति ।

व्याख्या—[ वेदस्य उपकरणं, तस्मिन्] वेदोपकरणे = वेदाङ्गे, नैत्यिके = नित्यभवे, स्वाध्याये = वेदाध्ययने, ब्रह्मयज्ञादौ वा, [होमस्य मन्त्रा होममन्त्रास्तेषु । होममन्त्रेषु = होमार्थं विहितमन्त्रेषु, च एव अनध्याये, अनुरोधः = आग्रहः, न अस्ति = न कर्त्तव्यः ।

अर्थ--वेदाङ्ग, नित्य ब्रह्मयज्ञादि स्वाध्याय तथा होमादि के लिए विहित मन्त्रों में अनध्याय की विधि नहीं है ॥१०५॥

नित्यकर्ममें अनध्याय नहीं—

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥१०६॥

अन्वय—नैत्यिके अनध्यायः नास्ति, हि तद् ब्रह्मसत्रं स्मृतम्, ब्राह्माहुतिहुतं अनध्यायवषट्कृतं पुण्यम् ।

व्याख्या—[नित्ये भवः नैत्यिकस्तस्मिन्] नैत्यिके=नित्यानुष्ठेये ब्रह्मयज्ञादौ, अनध्यायः, नास्ति=न भवति, हि=यतः, तद् ब्रह्मसत्रं=ब्रह्मयज्ञः, स्मृतं=कथितं, किञ्च [ब्रह्मणः आहुतिः ब्रह्माहुतिस्तया हुतं] ब्रह्माहुतिहुतं=वेदाहुतिप्रक्षिप्तं, [अनध्याये वषट्कृतम् इति] अनध्यायवषट्कृतं=अनध्याये वषट् उच्चारणं च, पुण्यमेव = पुण्यजनकमेव ।

अर्थ—नित्य किये जानेवाले वेदोंके स्वाध्यायमें अनध्याय नहीं होता क्योंकि वह ब्रह्मयज्ञ कहा जाता है । इसी प्रकार वेदमन्त्रों के द्वारा दी गई आहुति तथा अनध्याय में किया गया वषट् उच्चारण भी पुण्यजनक ही है, अनध्याय नहीं ॥१०६॥

स्वाध्यायसे इष्टप्राप्ति–

यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः ।
तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥१०७॥

अन्वय—यः नियतः शुचिः स्वाध्यायं विधिना अब्दम् अधीते, तस्य एषः नित्यं पयः दधि घृतं मधु क्षरति ।

व्याख्या—यः=पुरुषः, नियतः=नियमेन, शुचिः=पवित्रबाह्याभ्यन्तरः स्वाध्यायं=वेदाध्ययनं, विधिना=शास्त्रानुष्ठितेन, अब्दं=वर्षपर्यन्तं कुर्वीत तस्य पुरुषस्य, एषः=स्वाध्यायः, नित्यं=प्रतिदिनं, पयः=दुग्धं, दधि, घृतं मधु च क्षरति=स्रवति ।

अर्थ—जो पुरुष पवित्र होकर नियम से शास्त्रकी रीतिपूर्वक १ वर्ष तक स्वाध्याय करता है, उसे वह स्वाध्याय नित्य ही दूध, दही, घी तथा मधु प्रदान करता है ॥१०७॥

### होमादि की अवधि--

अग्नीन्धनं भैक्षचर्यामधः शय्यां गुरोर्हितम् ।
आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥ १०८ ॥

अन्वय--कृतोपनयनः द्विजः आसमावर्त्तनात् अग्नीन्धनं, भैक्षचर्याम्, अधः-शय्यां गुरोः हितं कुर्यात् ।

व्याख्या--[कृतम् उपनयनं यस्य सः] कृतोपनयनः=कृतोपवीतः, द्विजः=द्विजातिः, [ समावर्त्तनमभिव्याप्येत्यासमावर्त्तनं तस्मात् ] आसमावर्त्तनात्=समावर्त्तनसंस्कारपर्यन्तं, [ अग्नेः इन्धनम् ] अग्नीन्धनं=समिद्भिरग्निप्रज्वालनं, [भिक्षाणां समूहो भैक्षं, तस्य चर्या तां] भैक्षचर्यां=भिक्षाचरणं, अधःशय्यां=पृथिव्यां शयनं, गुरोः=आचार्यस्य, हितं=सेवां च, कुर्यात्=विदधीत ।

अर्थ—उपनयन हो जाने पर द्विजाति ब्रह्मचारी को समावर्त्तनपर्यन्त समिधा से अग्नि में होम, भिक्षाचरण, पृथ्वी पर शयन तथा गुरु की सेवा नित्य करनी चाहिये ॥ १०८ ॥

### अध्यापन के योग्य शिष्य--

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥ १०९ ॥

अन्वय—आचार्यपुत्रः, शुश्रूषुः, ज्ञानदः, धार्मिकः, शुचिः, आप्तः, शक्तः, अर्थदः, साधुः, स्वः एते दश धर्मतः अध्याप्याः ।

व्याख्या--[ आचार्यस्य पुत्रः ] आचार्यपुत्रः=आचार्यसुतः, शुश्रूषुः=सेवकः, [ज्ञानं ददातीति] ज्ञानदः, [धर्मे मतिरस्येति] धार्मिकः=धर्मशीलः, शुचिः=पवित्रान्तःकरणः, आप्तः=यथार्थवक्ता, शक्तः=निग्रहानुग्रहे समर्थः, [अर्थं ददातीति] अर्थदः=धनप्रदाता, साधुः=परोपकारी च, स्वः=स्वकीयः ज्ञातिसम्बन्ध्यादिः, एते दश, धर्मतः=धर्मशास्त्रानुसारेण, अध्याप्याः=अध्यापयितुं योग्याः ।

अर्थ--आचार्य का लड़का, सेवक, ज्ञान देनेवाला, धर्मशील, पवित्र, सत्यवक्ता, समर्थ, धन देनेवाला, परोपकारी तथा अपना सगोत्र सम्बन्धी आदि धर्मशास्त्र की दृष्टि से ये दश पढ़ाने योग्य हैं ॥ १०९ ॥

### पूछे बिना उत्तर देनेका निषेध--

नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ११० ॥

अन्वय--अपृष्टः कस्यचित् न ब्रूयात् अन्यायेन पृच्छतः च कस्यचित् न ( ब्रूयात् ) हि मेधावी जानन् अपि जडवत् आचरेत् ।

व्याख्या--[न पृष्टः] अपृष्टः=जिज्ञासां विनैव, कस्यचित् न ब्रूयात् धर्मशस्त्रादिकम्, अन्यायेन=धर्मोल्लङ्घनपूर्वकेण, पृच्छतः=जिज्ञासां कुर्वतः, अपि न (ब्रूयात्), हि=निश्चयेन, मेधावी=बुद्धिमान्, जानन्=ज्ञाततत्त्वोऽपि, लोके=संसारे, [जडेन तुल्यं] जडवत्=मूर्खवत्, समाचरेत्=आचरणं कुर्यात् ।

अर्थ—बुद्धिमान् पुरुष बिना पूछे हुए किसी को कुछ न बतावे तथा अन्याय से पूछने वाले को भी उत्तर न दे, वह जानता हुआ भी संसार में मूर्ख की तरह आचरण करे ॥ ११० ॥

### उक्त कथन का पालन न करने से हानि--

अन्यायेन च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ॥ १११ ॥

अन्वय— यः अन्यायेन प्राह, यः च अधर्मेण पृच्छति, तयोः अन्यतरः प्रैति, विद्वेषं वा अधिगच्छति ।

व्याख्या—य.=पुरुषः, अन्यायेन=धर्मव्यतिक्रमेण, प्राह=वदति, यः च अधर्मेण=धर्मातिक्रमणेन, पृच्छति=प्रश्नं करोति, तयोः=वक्तृपृच्छकयोः, अन्यतरः=एकः प्रैति=म्रियते, विद्वेषं=शत्रुतां, वा अधिगच्छति=प्राप्नोति ।

अर्थ—जो पुरुष अन्याय से कहता है तथा जो धर्ममार्ग का अतिक्रमण कर पूछता है, उन दोनों में से किसी एक की मृत्यु हो जाती है अथवा दोनों में विरोध हो जाता है, इस कारण अन्याय से कहना तथा किसी से अधर्म से पूछना नहीं चाहिये ॥ १११ ॥

### विद्यादान की निष्फलता--

धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ११२ ॥

अन्वय--यत्र धर्मार्थौ न स्यातां, तद्विधा शुश्रूषा अपि न ( स्यात् ), ( विद्वद्भिः ) तत्र ऊषरे शुभं बीजम् इव विद्या न वक्तव्या ।

व्याख्या--यत्र=यस्मिन् पात्रे, ] धर्मश्च अर्थश्च ] धर्मार्थौ=धर्मवित्ते न स्यातां, तद्विधा-धर्मार्थयुक्ता ( वा) शुश्रूषा=सेवा, न स्यात्, तत्र=तस्मिन् पात्रे, ऊषरे=तृणरहितभूमौ, शुभं=उत्कृष्टं, बीजम्=धान्यादिकमिव, विद्या, न वक्तव्या=न उपदेष्टव्या ।

अर्थ—जो धार्मिक तथा धनवान् नहीं है, अथवा जो धर्मपूर्वक सेवा या धनादि का अर्पण आचार्य को नहीं करता, आचार्य को चाहिये कि ऐसे पात्र को कदापि विद्या न पढ़ावें, क्योंकि उसे पढ़ाई गई विद्या ऊषर में बोये गये बीज के समान निष्फल है ॥११२ ॥

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ११३ ॥

अन्वय--ब्रह्मवादिना विद्यया समं कामं मर्त्तव्यं हि घोरायाम् अपि आपदि एनाम् इरिणे तु न वपेत् ।

व्याख्या—[ ब्रह्म वदतीति ब्रह्मवादी, तेन ] ब्रह्मवादिना=वेदाध्यापकेन, विद्यया समं=साकम्, कामं=यथेष्टं, मर्त्तव्यम्=प्राणत्यागः कर्त्तव्यः, ( किन्तु ) घोरायां=कृच्छ्रायाम्, आपदि=विपदि, एनां=विद्यां, इरिणे=ऊषरप्रदेशे शून्ये वा, न वपेत्=न प्रतिपादयेत् ।

अर्थ—वेदज्ञ को बिना किसी के पढ़ाये हुए अपनी विद्या के साथ मर जाना अच्छा, किन्तु ऊषर में डाले गये बीज के समान कुपात्र में विद्यादान कदापि अच्छा नहीं ॥११३॥

ब्राह्मणके प्रति विद्याका कथन--

विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥ ११४ ॥

अन्वय---विद्या ब्राह्मणम् एत्य आह, अहम् ते शेवधिः अस्मि, मां रक्ष, मां असूयकाय मा अदाः, तथा वीर्यवत्तमा स्याम् ।

व्याख्या--विद्या=सरस्वती, ब्राह्मणं=विप्रं, एत्य=आगत्य, आह=उवाच ( भोः ) अहं ते=तव, शेवधिः=निधिः, अस्मि, मां रक्ष=पालय,

मां, [ असूयां करोतीति असूयकः तस्मै ] असूयकाय=ईर्ष्यालवे, मा अदाः =न देहि, तथा=असूयकायाप्रदानेन, वीर्यवत्तमा=वलवत्तमा, स्याम्= भवेयम्।

**अर्थ**—विद्याने ब्राह्मण के पास आकर कहा—हे ब्राह्मण ! मैं तुम्हारी निधि हूँ। तुम मेरी रक्षा करो, यदि तुम मुझे किसी कुपात्र को न दोगे तो मैं बलवती रहूँगी ॥११४॥

यमेव तु शुचिं विद्या नियतब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥

**अन्वय**—यं तु शुचिं नियतब्रह्मचारिणं विद्याः, निधिपाय अप्रमादिने तस्मै विप्राय मां ब्रूहि।

**व्याख्या**—( आचार्यः ) यं=द्विजातिं, तु, शुचिं=बाह्यान्तःकरणपवित्रं, [ नियतं ब्रह्म चरितुं शीलमस्येति नियतब्रह्मचारी, तं ] नियतब्रह्मचारिणं= नियमेन ब्रह्मचर्यपालकं ( विद्याः=जानीयाः ), [ निधिं पातीति निधिपस्तस्मै ] निधिपाय=कोशरक्षकाय, अप्रमादिने=प्रमादरहिताय, तस्मै=ब्रह्मचारिणे, विप्राय=ब्राह्मणाय, मां=वाणीं, ब्रूहि=पाठय।

**अर्थ**—विद्याने कहा, हे आचार्य ! जिसे तुम बाहर तथा भीतर से पवित्र समझते हो तथा जो नियमसे वेदों की रक्षा कर सके उसी कोशरक्षक, अप्रमत्त, ब्राह्मण ब्रह्मचारीको मुझे प्रदान करना ॥११५॥

## गुरु के विना वेदग्रहण का निषेध—

ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ ११६ ॥

**अन्वय**—यः तु अधीयानात् अननुज्ञातं ब्रह्म अवाप्नुयात्, ब्रह्मस्तेयसंयुक्तः सः नरकं प्रतिपद्यते।

**व्याख्या**—यः=द्विजः तु, [ अधीयते अस्मादित्यधीयानस्तस्मात् ] अधीयानात्=शिक्षकात्, [ न अनुज्ञातम् ] अननुज्ञातं=अनुमतिं विनैव, ब्रह्म=वेदं, अवाप्नुयात्=पठेत्, [ ब्रह्मणः स्तेयं ब्रह्मस्तेयं, तेन संयुक्तः ] ब्रह्मस्तेयसंयुक्तः=वेदचौरः, सः=द्विजः, नरकं=निरयं, प्रतिपद्यते=प्राप्नोति,

अर्थ--जो ब्रह्मचारी गुरुकी अनुमति लिये बिना ही चोरी से वेदों का पाठ पढ़ लेता है उसे वेदकी चोरी का पाप लगता है तथा वह नरकगामी होता है ।। ११६ ।।

गुरुका अभिवादन--

लौकिकं वैदिकं वाऽपि तथाऽध्यात्मिकमेव च ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ।। ११७ ।।

अन्वय--यतः लौकिकं वैदिकं तथा आध्यात्मिकं वा अपि ज्ञानं आददीत, तं पूर्वम् अभिवादयेत् ।

व्याख्या--( ब्रह्मचारी ) यतः=यस्माद् आचार्यात् [ लोके भवं ] लौकिकं=व्यवहारोपपादकं धर्मशास्त्राचारादि, वैदिकं=वेदार्थज्ञानं यज्ञादिकं [ आत्मनि इति अध्यात्मं, तत्र भवम् ] आध्यात्मिकं=आत्मविषयकं ज्ञानम्, आददीत=गृह्णीत तं=गुरुं, पूर्वं=प्रथमम्, अभिवादयेत्=प्रणमेत ।

अर्थ--ब्रह्मचारी जिस आचार्यसे लौकिक, वैदिक तथा आध्यात्मिक ज्ञान प्राप्त करे सर्वप्रथम उस आचार्य को नमस्कार करे ।।११७।।

[ जन्मप्रभृति यत्किञ्चिच्चेतसा धर्ममाचरेत् ।
तत्सर्वं विफलं ज्ञेयमेकहस्ताभिवादनात् ।। ८ ।। ]

[ अर्थ--( मनुष्य ) जन्म से लेकर जो भी धर्म चित्त से करता है वह सब एक हाथ से गुरु का अभिवादन करने से नष्ट हो जाता है ।। ८ ।। ]

अविहित आचरण की निन्दा--

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ।। ११८ ।।

अन्वय--सावित्रीमात्रसारः अपि सुयन्त्रितः विप्रः वरम्, अयन्त्रितः सर्वाशी सर्वविक्रयी त्रिवेदः अपि वरं न ।

व्याख्या--[सावित्री एव सावित्रीमात्रः, स सारो यस्य सः] सावित्रीमात्रसारः=गायत्रीमात्रानुष्ठानपरः, अपि सुयन्त्रितः=आचारपरिपालकः, विप्रः=ब्राह्मणः, वरम्=श्रेष्ठः, किन्तु अनियन्त्रितः=आचारहीनः [सर्वान् अश्नातीति

तच्छील: ] सर्वाशी = सर्वभोक्ता, [सर्वान् विक्रेतुं शीलमस्येति] सर्वविक्रयी = रसदुग्धादिविक्रेता, त्रिवेद: = वेदत्रयज्ञानवान् अपि विप्र: वरं न = श्रेष्ठो नास्ति

अर्थ--गायत्री मात्र को जानने वाला सदाचारी ब्राह्मण श्रेष्ठ है किन्तु सब कुछ खाने वाला, तथा रसादिका विक्रय करने वाला तीनों वेदों का ज्ञाता भी हो तो वह श्रेष्ठ नहीं है ॥ ११७ ॥

## गुरुजनों के प्रति आचरण--

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥ ११९ ॥

अन्वय--श्रेयसा अध्याचरिते शय्यासने न समाविशेत्, शय्यासनस्थ: एनं प्रत्युत्थाय एव अभिवादयेत् ।

व्याख्या--श्रेयसा = श्रेष्ठेन गुर्वादिना, अध्याचरिते = अधिष्ठिते [शय्या च आसनं चेति शय्यासने, तत्र तिष्ठतीति] शय्यासनस्थ: = शयनासनस्थित एवं गुरुम्, प्रत्युत्थाय = सविनयमग्रे गत्वा, एव अभिवादयेत् = अभिवाद कुर्यात् ।

अर्थ--अपने से बड़े गुरु आदि की शय्या तथा आसन पर न बैठे, यदि शय्या तथा आसन पर बैठा हो तो उनके आने पर उठकर उनका स्वागत पूर्वक अभिवादन करे ॥ ११९ ॥

## अभिवादन का कारण--

ऊर्ध्वं प्राणा: ह्युत्क्रामन्ति यून:स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १२० ॥

अन्वय--हि स्थविरे आयति यून: प्राणा ऊर्ध्वम् उत्क्रामन्ति प्रत्युत्था नाभिवादाम्यां तान् पुन: प्रतिपद्यते ।

व्याख्या— हि = यत:, स्थविरे = विद्यावयोवृद्धे, आयति = गृहं प्रा सति, यून:, अपत्यगोत्रादे:, प्राणा: = असव:, ऊर्ध्वम् = स्वस्थानात् उप उत्क्रामन्ति = गच्छन्ति, (अत: युवा), [प्रत्युत्थानं च अभिवादनं च प्रत्युत्था नाभिवादने ताभ्यां ] प्रत्युत्थानाभिवादाभ्यां = स्वागतप्रणामाभ्यां, तान् प्राणान्, पुन: प्रतिपद्यते = प्राप्नोति ।

अर्थ—वृद्ध के घर में आने पर युवा पुरुष के प्राण ऊपर की ओर उठते हैं। फिर युवा पुरुष के प्रत्युत्थान तथा अभिवादन करने के उपरान्त वे अपने स्थान पर चले आते हैं ॥१२०॥

अभिवादन का फल--

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ १२१ ॥

**अन्वय**—अभिवादनशीलस्य, नित्यं वृद्धोपसेविनः, तस्य, आयुः विद्या यशः बलं चत्वारि वर्धन्ते ।

**व्याख्या**—[ अभिवादनं शीलं यस्य सः तस्य ] अभिवादनशीलस्य= प्रणामपरस्य [ नित्यं वृद्धानुपसेवितुं शीलं यस्य स तस्य ] वृद्धोपसेविनः= वृद्ध सेवा-परायणस्य, तस्य=पुरुषस्य, आयुः, विद्या, यशः, बलम् ( एतानि ) चत्वारि वर्धन्ते=एधन्ते ।

**अर्थ**—बड़ों को अभिवादन करने वाले एवं वृद्धों की सेवा करने वाले पुरुष की आयु, विद्या, यश तथा बल इन चारों की वृद्धि होती है ॥१२१॥

अभिवादन की विधि--

अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ १२२ ॥

**अन्वय**--ज्यायांसम् अभिवादयन् विप्रः अभिवादात् परं 'असौ नामा अहम् अस्मि' इति स्वं नाम परिकीर्तयेत् ।

**व्याख्या**--ज्यायांसम् = स्वस्मात् श्रेष्ठम्, अभिवादयन्=अभिवादनं कुर्वन्, विप्रः = ब्राह्मणः अभिवादात् = प्रणामात्, परं=अनन्तरं, 'असौ नामा अहम् अस्मि' इति=एवं प्रकारेण, स्वं नाम=स्वकीयाभिधानम् परिकीर्त्तयेत् = उच्चारयेत् ।

**अर्थ**--अपने से बड़ों को प्रणाम करने वाला युवा ब्राह्मण अभिवादन के अनन्तर 'अमुक नाम वाला मैं हूँ' इस प्रकार से अपना नाम उच्चारण करे ॥१२२॥

अनभिज्ञों तथा स्त्रियों का अभिवादन--

नामधेयस्य ये केचिदभिवादं न जानते ।
तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैव च ॥ १२३ ॥

**अन्वय**--प्रायः ये केचित् नामधेयस्य अभिवादं न जानते तान् प्रति तथैव सर्वाः स्त्रियः प्रति च अहम् इति ब्रूयात् ।

**व्याख्या**—प्रायः=विद्वान्, ये केचित्=ये केचन पुरुषाः, नामधेयस्य=उच्चरितनाम्नः, अभिवादं=अभिवादनशब्दार्थं, न जानते=न जानन्ति तान्=अविदुषः प्रति, तथैव सर्वाः, स्त्रियः प्रति च, अहम् इति ब्रूयात्=कथयेत् ।

**अर्थ**--जो लोग नामोच्चारणापूर्वक नमस्कार नहीं जानते, विद्वा पुरुष उन्हें अपना नाम न लेकर केवल 'मैं हूँ' इतना ही कहे इसी प्रकार सभ स्त्रियों से भी कहे ॥१२३॥

### भोः शब्द का उच्चारण--

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभावऋषिभिः स्मृतः ॥ १२४ ॥

**अन्वय**--अभिवादने स्वस्य नाम्नः अन्ते भोः शब्दं कीर्त्तयेत् हि ऋषिभि नाम्नां स्वरूपभावः भोभावः स्मृतः ।

**व्याख्या**--अभिवादने=प्रणामक्रियायां, स्वस्य=स्वकीयस्य, नाम्न अन्ते=अवसाने, भोः शब्दं कीर्त्तयेत्=उच्चारयेत्, हि=यतः, ऋषिभिः= नाम्नां स्वरूपभावः=स्वसत्तात्मकः, भोभावः=भोशब्दाभिप्रायः, स्मृतः = कथितः ।

**अर्थ**--अभिवादन करने के समय अपने नाम के अन्त में, 'अभिवाद अमुकनामाहं भोः', इस प्रकार भो शब्द का उच्चारण करना चाहिये क्यों महर्षियों ने भो-शब्द को नाम का स्वरूप ही कहा है ॥१२४॥

### प्रत्यभिवादन का प्रकार—

आयुष्मान्भव सौम्येति वाक्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाक्यः पूर्वाक्षरः प्लुतः ॥ १२५

**अन्यव**--विप्रः अभिवादने 'अयुष्मान् भव सौम्य' इति वाच्यः अ नाम्नः अन्ते च पूर्वाक्षरः अकारः प्लुतः वाच्यः ।

**व्याख्या**--विप्रः=ब्राह्मणः, अभिवादने=अभिवादनोत्तरे, आयुष्म भव सौम्य, इति वाच्यः=वक्तव्यः, अस्य=अभिवादयितुः, नाम्नः=अभिधेय

अन्ते च पूर्वाक्षरः नाम्नामन्ते वर्त्तमानः अन्त्याक्षरः अकारः प्लुतः वाच्यः=वक्तव्य इत्यर्थः ।

**अर्थ**--युवा के प्रणाम करने के अनन्तर वृद्ध को उसके उत्तर में 'आयुष्मान् भव सौम्य' ऐसा कहना चाहिये और युवा के नाम के अन्त्यावयव अकारादि स्वर वर्णों को प्लुत उच्चारण करना चाहिये । यथा 'आयुष्मान् भव सौम्य देवदत्त३' ॥ १२५ ॥

## मूर्खके अभिवादनका निषेध--

**यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।**
**नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ १२६ ॥**

**अन्वय**--यः विप्रः अभिवादस्य प्रत्यभिवादनं न वेत्ति, सः विदुषा न अभिवाद्यः स विप्रः यथा शूद्रः तथैव ।

**व्याख्या**--यः विप्रः=ब्राह्मणः, अभिवादस्य=प्रणामस्य, प्रत्यभिवादनं=आशीर्वचनं, न वेत्ति=न जानाति, सः=विप्रः, विदुषा=मनीषिणा, न अभिवाद्यः=न नमस्करणीयः सः यथा शूद्रः, तथैव=शूद्रतुल्य इत्यर्थः ।

**अर्थ**--जो ब्राह्मण प्रणाम के बदले में प्रत्यभिवादन ( आशीर्वाद देना ) नहीं जानता, विद्वान् पुरुष उसे प्रणाम न करे क्योंकि वह शूद्रके समान है ॥ १२६ ॥

**ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।**
**वैश्यं क्षेमं समागम्य शद्रमारोग्यमेव च ॥ १२७ ॥**

**अन्वय**--ब्राह्मणं समागम्य कुशलं पृच्छेत्, क्षत्रबन्धुम्, अनामयं पृच्छेत्, वैश्यं, क्षेमम्, शूद्रम् आरोग्यम् एव च पृच्छेत् ।

**व्याख्या**—वृद्धः ब्राह्मणं=विप्रं, समागम्य=संप्राप्य, कुशलं पृच्छेत्, क्षत्रबन्धुं=क्षत्रियं ( समागम्य ) अनामयं=स्वास्थ्यं, पृच्छेत्, वैश्यं समागम्य, क्षेमम्=कल्याणं, पृच्छेत् एवं शूद्रं ( समागम्य ) आरोग्यम्=रोगराहित्यं पृच्छेत् ।

**अर्थ**--ब्राह्मणके मिलनेपर उससे कुशल, क्षत्रियसे स्वास्थ्य, वैश्यसे कल्याण तथा शूद्रसे नीरोगताका समाचार पूछना चाहिये ॥ १२७ ॥

दीक्षितके नामोच्चारणका निषेध—

अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्।
भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥ १२८ ॥

**अन्वय**—यः यवीयान् अपि दीक्षितः ( सः ) नाम्ना अवाच्यः, धर्मवित् एव तु भो भवत्पूर्वकं एनम् अभिभाषेत।

**व्याख्या**—यः यवीयान्=कनिष्ठः, अपि [ दीक्षा सञ्जाता अस्येति ] दीक्षितः=यज्ञकर्मणि दीक्षां गृहीतः, सः, नाम्ना=नामग्रहणपूर्वकं [न वाच्यः] अवाच्यः=नाकारितव्यः, [धर्मं जानातीति] धर्मवित्=धर्मज्ञः पुरुषः एवं=यज्ञकर्मणि गृहीतदीक्षं, भो भवत् पूर्वकं अभिभाषेत=ब्रूयात्।

**अर्थ**—अपनेसे छोटा भी यदि यज्ञ कर्ममें दीक्षा लिया हो तो धर्मज्ञ व्यक्तिको उसका नाम नहीं लेना चाहिये उसे भोः अथवा भवान् शब्द कहकर पुकारना चाहिये ॥ १२८ ॥

परस्त्री के नामोच्चारणका निषेध—

परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १०९ ॥

**अन्वय**—या स्त्री=नारी [परस्य पत्नी] परपत्नी=परभार्या, योनितः=जन्मतः, विद्यातः, वा असम्बन्धा=सम्बन्धरहिता, तां तु भवति सुभगे भगिनि इति च इत्येवं ( वयोनुसारेण ) ब्रूयात्=अभिभाषेत।

**अर्थ**—जो दूसरेकी पत्नी हो किन्तु अपने गोत्र, तथा सम्बन्धमें न आती हो, उसे भवति सुभगे तथा भगिनी आदि सम्बोधनकर बोलना चाहिये ॥१२९॥

कनिष्ठ मामा आदिका अभिवादन—

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्।
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥ १३० ॥

**अन्वय**—यवीयसः अपि मातुलान् पितृव्यान् श्वशुरान् ऋत्विजः गुरून् च प्रत्युत्थाय 'असौ अहम्' इति ब्रूयात्।

**व्याख्या**—यवीयसः=वयसो न्यूनानपि, मातुलान्=मातुर्भ्रातॄन् पितृव्यान्=पितुःभ्रातॄन् श्वशुरान्=कन्याप्रदायकान्, ऋत्विजः=यज्ञकर्तॄन्, गुरून् एतान् प्रत्युत्थाय=प्रत्युद्गम्य असौ अहम् इति ब्रूयात् ।

**अर्थ**--अवस्था में अपने छोटे भी मामा, चाचा, श्वशुर, ऋत्विक् तथा गुरु का खड़ा होकर स्वागत करना चाहिये तथा मैं 'अमुक व्यक्ति हूँ' इस प्रकार से कहना चाहिये ।। १३० ।।

**गुरुपत्नी के समान पूज्य--**

**मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ।**
**सम्पूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ।। १३१ ।।**

**अन्वय**--मातृष्वसा, मातुलानी, श्वश्रूः अथ पितृष्वसा (एताः) गुरुपत्नीवत् संपूज्या । ताः गुरुभार्यया समाः ।

**व्याख्या**—मातृष्वसा=मातुः भगिनी, मातुलानी=मातुलभार्या, श्वश्रूः=श्वशुरपत्नी, अथ पितृष्वसा=पितुर्भगिनी (एताः, सर्वाः) [ गुरुपत्न्या तुल्यं ] गुरुपत्नीवत्=गुरुभार्यावत् संपूज्याः=अर्चनीयाः, ( यतः ) ताः=सर्वाः गुरुभार्यया=गुरुपत्न्या, समाः=तुल्याः ।

**अर्थ**--मौसी, मामी, सास तथा फूआ इन लोगों का आदर गुरुपत्नी के समान करना चाहिये, क्योंकि ये सब गुरुपत्नी के तुल्य हैं ।। १३१ ।।

**ज्येष्ठ भ्रातृपत्नी का अभिवादन—**

**भ्रातुर्भार्योपसङ्ग्राह्या सवर्णाऽहन्यहन्यपि ।**
**विप्रोष्य तूपसङ्ग्राह्या ज्ञातिसम्बन्धियोषितः ।। १३२ ।।**

**अन्वय**--सवर्णा भ्रातुः भार्या अहनि अहनि अपि उपसंग्राह्या, ज्ञातिसम्बन्धियोषितः तु विप्रोष्य उपसंग्राह्याः ।

**व्याख्या**—[वर्णेन सहिता] सवर्णा=सजातीया, भ्रातुः=ज्येष्ठस्य, भार्या=भ्रातृपत्नी, अहनि अहनि=प्रतिदिनं, उपसंग्राह्या=अभिवन्दनीया भवति [ज्ञातयश्च सम्बन्धिनश्च ज्ञातिसम्बन्धिनस्तेषां योषितः] ज्ञातिसम्बन्धियोषितः=गोत्रसम्बन्धिभार्याः, तु-विप्रोष्य=प्रवासादागत्य, उपसंग्राह्याः=अभिवाद्याः ।

अर्थ--अपने ज्येष्ठ भ्राता की स्त्रीको नित्यप्रति प्रणाम करे किन्तु गोत्र तथा सम्बन्धियों की स्त्रियों को विदेश से आने पर ही प्रणाम करना चाहिये ॥ १३२ ॥

मातृवद् व्यवहार्य--

पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।
मातृवत् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ १३३ ॥

अन्वय--पितुः मातुश्च भगिन्यां ज्यायस्यां स्वसरि अपि च मातृवत् वृत्तिम् आतिष्ठेत् ताभ्यः माता गरीयसी ।

व्याख्या--पितुः=जनकस्य, मातुः=जनन्याः च, भगिन्यां=स्वसरि, ज्यायस्यां=श्रेष्ठायां, भगिन्यां=स्वसरि च, [मात्रा तुल्यं] मातृवत्=मातृसदृशीं, वृत्ति=व्यवहारं, आतिष्ठेत्=कुर्यात्, ताभ्यः=पूर्वोक्ताभ्यः, माता=जननी, गरीयसी=श्रेष्ठा ।

अर्थ--फूआ, मौसी तथा अपने से जेठी बहन से माता के समान व्यवहार करे । परन्तु माता इन सबमें श्रेष्ठ है, ऐसा भी जाने ॥ १३३ ॥

मैत्रीकाल का नियम--

दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् ।
त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनानि स्वयोनिषु ॥ १३४ ॥

अन्वय--पौरसख्यं दशाब्दाख्यं, कलाभृतां पञ्चाब्दाख्यं, श्रोत्रियाणां त्र्यब्दपूर्वकं, स्वयोनिषु स्वल्पेन अपि ( सख्यं भवतीति ) ।

व्याख्या--[ पुरे भवं पौरं, पौरं च तत् सख्यं ] पौरसख्यं पुरवासिमैत्र्यं [दश च तानि अब्दानि दशाब्दानि, दशाब्दानि आख्या यस्य तत्] दशाब्दाख्यं=दशवर्षपर्यन्तं भवति, [ कलां बिभ्रतीति कलाभृतस्तेषां ] कलाभृतां=चतुःषष्टिकलाभिज्ञानां, पञ्चाब्दाख्यं = पञ्चवर्षपर्यन्तं, श्रोत्रियाणां=वेदपाठिनां त्र्यब्दपूर्वं=त्रिवर्षपर्यन्तं, [स्वस्य योनयः स्वयोनयस्तासु] स्वयोनि=ष्वस्वजातिषु, स्वल्पेन=स्वल्पकालेन सख्यं-मैत्र्यं, भवतीति शेषः ।

अर्थ—दश वर्ष की छुटाई-बड़ाई रहने पर पुरवासियों से, पाँच वर्ष की न्यूनाधिकता में कला जानने वालों से, तीन वर्ष की छुटाई-बड़ाई पर श्रोत्रियों से

तथा किञ्चित् मात्र छुटाई-बड़ाई रहने से अपनी जातिवालों के साथ मैत्री का व्यवहार करना चाहिये ॥१३४॥

ब्राह्मण-क्षत्रिय में पिता-पुत्रभाव--

ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥१३५॥

अन्वय—दशवर्षं ब्राह्मणं, शतवर्षं भूमिपं तु पितापुत्रौ विजानीयात्, तयोः ब्राह्मणः पिता (धर्मतः भवतीति शेषः ) ।

व्याख्या—दशवर्षं=दशाब्दिकं, ब्राह्मणं, शतवर्षं=शताब्दिकं, भूमिपं=क्षत्रियं तु [ पिता च पुत्रश्च ] पितापुत्रौ विजानीयात् । तयोः=ब्राह्मणभूमिपयोः मध्ये, ब्राह्मणः=विप्रः, एव पिता=जनकः इति विजानीयात् ।

अर्थ—दश वर्ष के ब्राह्मण तथा सौ वर्ष के क्षत्रिय को पिता-पुत्र के समान समझना चाहिये, उन दोनों में दश वर्ष का भी ब्राह्मण पिता है, और सौ वर्ष का भी क्षत्रिय उसका पुत्र है ॥१३५॥

धनादि की उत्तरोत्तर मान्यता--

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥१३६॥

अन्वय—वित्तं, बन्धुः, वयः, कर्म, पञ्चमी विद्या, एतानि मान्यस्थानानि भवन्ति, ( तत्र ) यद् यद् उत्तरं तद् गरीयो भवति ।

व्याख्या--वित्तं=धनं, बन्धुः=भ्रातादिः, वयः=अवस्था, कर्म=श्रौतस्मार्त्तक्रिया, पञ्चमी=पञ्चसंख्यापूरणी, विद्या, एतानि [ मान्यस्य स्थानानि ] मान्यस्थानानि=पूज्यस्थानानि, भवन्ति, यत्र यद् यद् उत्तरं, यथा-वित्ताद् बन्धुः, बन्धोः वयः, वयसः कर्म, कर्मणो विद्या इत्येवंरूपं, तद् गरीयः=श्रेष्ठं भवति ।

अर्थ--धन, बन्धु, वय, कर्म तथा विद्या, ये मान्यता के स्थान हैं इनमें भी धन से भाई, धन और भाई से अवस्था, इन तीनों से भी कर्म, तथा वित्त-बन्धु-वय एवं कर्म से विद्या श्रेष्ठ है ॥१३६॥

इसका अपवाद--

पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥१३७॥

**अन्वय**--त्रिषु वर्णेषु पञ्चानां यत्र भूयांसि गुणवन्ति च स्युः स मानार्हः, किञ्च दशमीं गतः शूद्रः अपि मानार्हः ।

**व्याख्या**--त्रिषु वर्णेषु=ब्राह्मणादिषु, पञ्चानां=वित्तादीनां, मध्ये यत्र=यस्मिन् पुरुषे, भूयांसि=अधिकानि, गुणवन्ति=गुणाः, स्युः=भवेयुः स मानार्हः, किञ्च, दशमीं गतः=नवत्यधिकवयस्कः, शूद्रः अपि अत्र मानार्हः ।

**अर्थ**--तीनों वर्णों में भी जिस वर्ण के पुरुष में अधिक वित्तादि गुण प्राप्त हों उस वर्णवाला पुरुष श्रेष्ठ है, ऐसे ही नब्बे वर्ष से अधिक अवस्थावाला शूद्र भी सम्मान के योग्य है ॥१३७॥

### मार्ग देने योग्य व्यक्ति--

चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥१३८॥

**अन्वय**--चक्रिणः, दशमीस्थस्य, रोगिणः, भारिणः, स्त्रियः, स्नातकस्य, राज्ञः वरस्य च पन्थाः देयः ।

**व्याख्या**--[ चक्रमस्यास्तीति चक्री, तस्य ] चक्रिणः=रथशकटाद्यारूढस्य, [दशम्यां तिष्ठतीति दशमीस्थस्तस्य] दशमीस्थस्य=नवत्यधिकवयस्कस्य, रोगिणः=रुग्णस्य, [भारमस्यास्तीति भारी, तस्य] भारिणः=भारवाहकस्य, स्त्रियः=नार्याः, [ स्नात एव स्नातकस्तस्य ] स्नातकस्य=अध्ययनं समाप्य गृहस्थाश्रमे प्रविविक्षोः, राज्ञः=नृपस्य, वरस्य=विवाहार्थं समुद्यतस्य च, पन्थाः=मार्गः, देयः=दातव्यः ।

**अर्थ**—सवारी में बैठे हुएको, नब्बे वर्ष से अधिक अवस्थावालेको, रोगी, को, भारवाही को, स्त्री को, स्नातक को, राजा को, तथा दुलहे को रास्ता दे देना चाहिये ॥१३८॥

### इनमें स्नातककी श्रेष्ठता—

तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥१३९॥

**अन्वय**--समवेतानां तेषां तु स्नातक-पार्थिवौ मान्यौ, राजस्नातकयोः च स्नातक एव नृपमानभाक् भवति) ।

व्याख्या--समवेतानां=एकत्र समागतानां, तेषां=सर्वेषां, मध्ये, तु [ स्नातकश्च पार्थिवश्च ] स्नातकपार्थिवौ=स्नातकराजानौ, मान्यौ पूजार्हौ, [ राजा च स्नातकश्च राजस्नातकौ तयोः ] राजस्नातकयौः=नृपस्नातकयोः, स्नातकः, [मानं भजतीति मानभाक्, नृपस्य मानभाक् इति ] नृपमानभाक्= राज्ञा सम्मानार्हः ( भवति ) ।

अर्थ--उपर्युक्त आठों में स्नातक तथा राजा संमान के अधिकारी हैं। राजा और स्नातक में भी स्नातक ही राजा से सम्मान प्राप्त करने का अधिकारी है ॥१३९॥

## आचार्यकी परिभाषा

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्य प्रचक्षते ॥१४०॥

अन्वय—यः शिष्यम् उपनीय सकल्पं सरहस्यं च वेदम् अध्यापयेत्, तम् आचार्य प्रचक्षते ।

व्याख्या--यः द्विजः=विप्रः, शिष्यम्, उपनीय=उपनयनं विधाय, [ कल्पेन सहितः सकल्पस्तं ] सकल्पं=यज्ञविद्यासहितं, [ रहस्येन सहितं ] सरहस्यं=उपनिषदा सहितं, वेदम् अध्यापयेत्, तम् आचार्यं प्रचक्षते=कथयन्ति ।

अर्थ--जो शिष्यका स्वयं उपनयन कर उसको कल्प तथा उपनिषत्के सहित ( अर्थात् कर्मकाण्ड और ज्ञानकांड ) वेद पढ़ावे, उसे आचार्य कहते हैं ॥१४०॥

## उपाध्यायकी परिभाषा

एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥१४१॥

अन्वय--यः तु वेदस्य एकदेशं पुनः वेदाङ्गानि अपि वा वृत्त्यर्थम् अध्यापयति सः उपाध्यायः उच्यते ।

व्याख्या—यः=विप्रः तु, वेदस्य=श्रुतेः, एकदेशम्=मन्त्रं ब्राह्मणं वा वेदाङ्गानि=कोशव्याकरणादीनि, ( शिक्षा, कल्पः, निरुक्तं, छन्दः, ज्योतिषम् व्याकरणम्, इति षडङ्गानि वेदस्य ), [ वृत्तेः अर्थं ] वृत्त्यर्थम्=जीविकार्थं, अध्यापयेत्=पाठयेत्, सः विप्रः उपाध्यायः उच्यते=उपाध्यायः कथ्यते ।

अर्थ--जो ब्राह्मण वेदके मन्त्रभाग अथवा ब्राह्मण भाग में से किसी एक भाग को तथा शिक्षा, कल्प, व्याकरणादि वेदाङ्गों को वृत्ति (जीविका) के लिये पढ़ाता है उसे उपाध्याय कहते हैं ॥१४१॥

गुरुकी परिभाषा--

निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥१४२॥

अन्वय—यः निषेकादीनि कर्माणि यथाविधि करोति अन्नेन च संभावयति, सः विप्रः गुरुः उच्यते ।

व्याख्या—यः, [निषेक आदिर्येषां तानि] निषेकादीनि=गर्भाधानादीनि, कर्माणि=कार्याणि, [ विधिमनतिक्रम्येति ] यथाविधि=धर्मशास्त्रानुसारेण करोति, अन्नेन-भोजनदानेन, संभावयति=पोषयति च, सः विप्रः गुरुः उच्यते ।

अर्थ—जो गर्भाधानादि संस्कार वेदोक्त विधि से कराता है तथा भोजन देकर पालन करता है वह ब्राह्मण गुरु कहा जाता है ॥१४२॥

ऋत्विक् की परिभाषा--

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥१४३॥

अन्वय—यः वृतः अग्न्याधेयं, पाकयज्ञान्, अग्निष्टोमादिकान् मखान् यस्य करोति स तस्य ऋत्विग् इह उच्यते ।

व्याख्या—यः विप्रः, वृतः=यजमानेन समन्त्रकं यज्ञे स्वीकृतः, [ अग्नेः आधेयः यस्मिन् कर्मणि तत् ] अग्न्याधेयम्=अग्न्युत्पादनादिकम्, पाकयज्ञान्=अष्टकाश्राद्धादीन्, अग्निष्टोमादिकान्=तत्तन्नामकान् मखान्=यज्ञान्, यस्य=यजमानस्य, करोति=सम्पादयति, सः=पुरुषः, तस्य=यजमानस्य, ऋत्विग्=इह=धर्मशास्त्रे, उच्यते=कथ्यते ।

अर्थ—जो यजमान के द्वारा यज्ञ में वृत होकर अग्न्याधेय पाकयज्ञ ( चरु अधिश्रयण आदि ) तथा अग्निष्टोमादि यज्ञों को करता है वह उस यजमान का ऋत्विग् कहा जाता है ॥१४३॥

अचार्य का गौरव—

य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन ॥१४४॥

व्याख्या—यः उभौ श्रवणौ ब्रह्मणा अवितथम् आवृणोति, स माता, स पिता ज्ञेयः, तं कदाचन न द्रुह्येत्।

व्याख्या—यः = विप्रः, उभौ = द्वौ अपि, श्रवणौ = कर्णौ, ब्रह्मणा = वेदेन, आवृणोति = आच्छादयति, स माता = जननी, स पिता = जनकः, ज्ञेयः = ज्ञातव्यः, तं कदाचन = कस्मिन्नपि काले, न द्रुह्येत् = द्रोहं न कुर्यात्।

अर्थ—जो दोनों कानों को वेद के उपदेश से सार्थक बना देता है वह माता है, पिता है, उससे कभी भी वैर नहीं करना चाहिए ॥१४४॥

क्रमशः गुरुत्व—

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता।
सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥१४५॥

अन्वय—दश उपाध्यायान् आचार्यः, आचार्याणां शतं पिता, सहस्रं पितॄन् माता, गौरवेण अतिरिच्यते।

व्याख्या—दश=दशसंख्यान्, उपाध्यायान् = वृत्त्यर्थं वेदैकदेशवेदाङ्गाध्यापयितॄन् अपेक्ष्य, आचार्यः, [आचारयति वेत्याचार्यः तेषाम्] आचार्याणाम् = उपनीयवेदाध्यापकानाम्, शतं = शतसंख्याकं पिता=जनकः गर्भाधानादिकर्ता अन्नेन पोषयिता च, सहस्रं पितॄन् = जनकान् अपेक्ष्य, माता=जननी, गौरवेण = महिम्ना, अतिरिच्यते = अधिका भवति।

अर्थ—उपाध्याय से दश गुना आचार्य, आचार्य से सौ गुना पिता तथा पिता से हजार गुना माता श्रेष्ठ है ॥१४५॥

गुरु से द्रोह का निषेध—

उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥१४६॥

अन्वय—उत्पादकब्रह्मदात्रोः ब्रह्मदः पिता गरीयान्, हि विप्रस्य ब्रह्मजन्म प्रेत्य च इह च शाश्वतम्।

**व्याख्या**--[ उत्पादयतीति उत्पादकः, ब्रह्म ददातीति ब्रह्मदाता, उत्पादकश्च ब्रह्मदाता च तयोः] उत्पादकब्रह्मदात्रोः=जनकाचार्ययोः [ब्रह्म ददातीति ब्रह्मदः=आचार्यः पिता, [ अतिशयेन गुरुः इति ] गरीयान्=अतीव श्रेष्ठः हि विप्रस्य=ब्राह्मणस्य, ब्रह्मजन्म=उपनयनपूर्वकवेदाध्ययनोत्पत्तिः, प्रेत्य च परलोके, इह च=अस्मिन् लोके च, शाश्वतम्=नित्यं भवति ।

**अर्थ**--जन्म देनेवाले पिता तथा वेद का ज्ञान देनेवाले पिता, इन दोनों में वेद का उपदेश करने वाला पिता श्रेष्ठ है। क्योंकि वेदज्ञान से ब्राह्मण को इस लोक तथा परलोक में शाश्वत पद की प्राप्ति होती है ॥१४६॥

### माताकी जाति ही बालककी भी—

कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते ॥१४७॥

**अन्वय**--माता पिता च एनं मिथः कामाद् यद् उत्पादयतः, तस्य तां संभूतिं विद्यात्, यद् योनौ अभिजायते ।

**व्याख्या**—माता=जननी, पिता=जनकः, एनं=बालकं, मिथः=अन्योन्यं, कामाद्=कामवेगात्, यत्=यस्माद्धेतोः, उत्पादयतः, तस्य=बालकस्य तां=मातरं, सम्भूतिं=जन्मकरणं, विद्यात्=जानीयात्, यद् योनौ=यज्जाती अभिजायते=उत्पद्यते ।

**अर्थ**--माता तथा पिता परस्पर काम के वेग से बालक को उत्पन्न करते हैं, अतः बालक जिस जाति की माता से जन्म लेता है उसी जाति में उसका जन्म समझना चाहिये ॥१४७॥

### आचार्यकी श्रेष्ठता—

आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा ॥१४८॥

**अन्वय**--वेदपारगः आचार्यः तु अस्य यां जातिं विधिवत् सावित्र्या उत्पादयति, सा सत्या, अजरा अमरा च भवति ।

**व्याख्या**—[ वेदस्य पारं गच्छतीति ] वेदपारगः=वेदज्ञः, [आचारं स्वयमाचरते वेति ] आचार्यः=उपनीय वेदोपदेष्टा, यां जातिं=जन्म, विधिव

शास्त्रदृष्ट्या उत्पादयति=जनयति, सा=जातिः, सत्या=सत्यस्वरूपा, अजरा=जरादिविकाररहिता, अमरा=नाशरहिता (च भवति) ।

अर्थ--वेदविद् आचार्य विधिपूर्वक गायत्री के मन्त्रोपदेश से बालक का जो जन्म देता है, जरा तथा मरण से रहित वही उसका सच्चा जन्म कहा जाता है ।।१४८।।

प्रत्येक अध्यापक गुरु है--

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ।।१४९।।

अन्वय--यः यस्य अल्पं वा बहु वा श्रुतस्य उपकरोति, इह तया श्रुतोपक्रियया तम् अपि गुरुं विद्यात् ।

व्याख्या--यः=अध्यापकः, यस्य=अध्येतुः, अल्पं=किञ्चित्, बहु=अधिकं वा श्रुतस्य=वेदस्य, उपकरोति=उपकारं करोति, इह=लोके, तया श्रुतोपक्रियया=वेदाध्यापनोपकारेण, तम् अपि गुरुं=आचार्यं विद्यात्=जानीयात् ।

अर्थ--जो थोड़ा या अधिक वेद पढ़ाकर जिसका उपकार करता है उस वेदाध्यापनरूप उपकार से वह उसका गुरु होता है । ।।१४९।।

बालक भी ब्राह्मण पितृतुल्य है--

ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ।।१५०।।

अन्वय--ब्राह्मस्य जन्मनः कर्त्ता, स्वधर्मस्य च शासिता बालः अपि विप्रः वृद्धस्य धर्मतः पिता भवति ।

व्याख्या--ब्राह्मस्य=वेदसम्बन्धिनः जन्मनः=उत्पत्तेः, वेदाधिकारप्राप्तये उपनयनद्वारेण लब्धस्य द्विजत्वस्येत्यर्थः, कर्त्ता=सम्पादयिता, स्वधर्मस्य=अध्ययनादिरूपत्रैवर्णिकधर्मस्य, च शासिता=उपदेष्टा, बालः अपि विप्रः=ब्राह्मणः, वृद्धस्य=क्षत्रियादेः, धर्मतः धर्मशास्त्रानुसारतः, पिता भवति ।

अर्थ--वेदाधिकाररूप द्विजातित्व की प्राप्ति के लिए उपनयन करने वाला तथा अपने वर्ण के अनुरूप धर्म की शिक्षा देनेवाला, अवस्था में छोटा भी ब्राह्मण, धर्म की दृष्टि से वृद्धों के पिता के समान होता है । ।।१५०।।

आङ्गिरस का दृष्टान्त—

अध्यापयामास पितॄञ्शिशुराङ्गिरसः कविः।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥१५१॥

अन्वय--आङ्गिरसः कविः शिशुः पितॄन् अध्यापयामास ( सः ) ता ज्ञानेन परिगृह्य पुत्रका इति ह उवाच।

व्याख्या—[ अङ्गिरसः अपत्यम् ] आङ्गिरसः=बृहस्पतिः, कविः= विद्वान्, शिशुः=बालकः, पितॄन्=पितृतुल्यान् पितृव्यादीन्, अध्यापयामास पाठयामास, ( सः ) तान्=पितृव्यादीन्, ज्ञानेन परिगृह्य=विप्रेषु ज्ञान ज्येष्ठत्वमिति विचार्य, [ पुत्रा एव ] पुत्रकाः=हे पुत्राः, ( अधीध्वम् ) इ ह=एवं प्रकारेण, उवाच=उक्तवान्।

**अर्थ**--अङ्गिरा के विद्वान् बालक बृहस्पति ने अपने से अवस्था अधिक चाचा इत्यादि को पढ़ाते समय, 'हे पुत्रो पढ़ो' ऐसा सम्बो किया था ॥१५१॥

ते तमर्थमपृच्छन्त देवानागतमन्यवः।
देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥१५२॥

अन्वय--आगतमन्यवः ते देवान् तम् अर्थम् अपृच्छन्त, देवाश्च एत समेत्य ऊचुः 'शिशुः वः न्याय्यम्, उक्तवान्' इति।

व्याख्या--[ आगतः मन्युर्येषां ते ] आगतमन्यवः=सञ्जातकोपाः, ते पितृव्यादयः, देवान्, तमर्थं=पुत्रेति सम्बोधनकारणम्, अपृच्छन्त=पृष्टवन्त देवाश्च, एतान्=आङ्गिरसस्य पितृव्यादीन्, समेत्य=संप्राप्य, ऊचुः=उ वन्तः। शिशुः=बालकः, वः=युष्मान्, न्याय्यम्=उचितम्, उक्तवान् आहूतवान्।

**अर्थ**--जब बृहस्पति के चाचा इत्यादि ने देवताओं के पास जा बृहस्पति के द्वारा कहे गये, 'हे पुत्रकाः अधीध्वम्' इस सम्बोधन का का पूछा तो उन्होंने कहा--इस लड़के ने आप लोगों को ठीक कहा है ॥१५२॥

मूर्ख छोटा और ज्ञानी श्रेष्ठ होता है—

अज्ञो भवति वै बालः पिता भवति मन्त्रदः।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥१५३॥

**अन्वय**—अज्ञ: वै बाल: भवति, मन्त्रद: पिता भवति, हि अज्ञं बालम् इति, मन्त्रदम् पिता इत्येव तु आहु: ।

**व्याख्या**--[जानातीति ज्ञ:, न ज्ञ:] अज्ञ:=ज्ञानरहित:, बाल:=शिशु: शिष्यो वा भवति, [ मन्त्रं ददातीति ] मन्त्रद:=मन्त्राध्यापक:, पिता=गुरु: भवति, हि=यत:, अज्ञं=ज्ञानरहितं, बालं=शिशुं शिष्यं वा इति, मन्त्रदम् =उपदेष्टारं, पिता इत्येव ( तु आचार्या ) आहु:=कथयन्ति ।

**अर्थ**—उन देवताओं ने कहा 'हे महर्षियो ! ज्ञानरहित बालक होता है, और ज्ञान देनेवाला पिता होता है, यह सत्य है, क्योंकि आचार्यों ने अज्ञ को ही बालक तथा उपदेष्टा को आचार्य ( पिता ) कहा है ॥१५३॥

### अवस्था की अपेक्षा ज्ञान से श्रेष्ठता—

न हायनैर्न पलितैर्न वित्तेन न बन्धुभि: ।
ऋषयश्चक्रिरे धर्मं योऽनूचान: स नो महान् ॥१५४॥

**अन्वय**--( कश्चिदपि ) हायनै: ( महान् ) न, पलितै: ( महान् ) न, वित्तेन ( महान् ) न, बन्धुभि: अपि ( महान् ) न, ( किन्तु ) य: अनूचान: स: नो महान्, इति ऋषय: धर्मं चक्रिरे ।

**व्याख्या**--(कश्चित् पुरुष:) हायनै:=अधिकवर्षै:, (महान्) न (भवति) पलितै:=सितकेशै: ( महान् ) न ( भवति ), वित्तेन=धनाधिक्येन ( वा महान् ) न, बन्धुभि: ( अपि महान् ) न, ( किन्तु ) य: पुरुष:, अनूचान:= साङ्गवेदपारग:, स:, न:=अस्मासु, महान्=श्रेष्ठ: भवति, इति ऋषय:= मन्त्रद्रष्टार: धर्मं चक्रिरे=विहितवन्त: ।

**अर्थ**—कोई भी पुरुष अवस्था में अधिक होने से, केशों के पक जाने से, धन की अधिकता से अथवा बन्धुओं के आधिक्य से बड़ा नहीं कहा जाता; किन्तु जो वेदवेदाङ्ग का पारदर्शी विद्वान् है वही हम लोगों से बड़ा होता है; यही उन ऋषियों ने बृहस्पति के चाचा इत्यादि के पूछने पर धर्म का निर्णय किया था ॥१५४॥

### वर्णक्रम से श्रेष्ठता—

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यत: ।
वैश्यानां धान्यधनत: शूद्राणामेव जन्मत: ॥१५५॥

अन्वय—विप्राणां ज्ञानतः, क्षत्रियाणां तु वीर्यतः, वैश्यानां धान्यधनत
शूद्राणाम् एव जन्मतः ज्यैष्ठ्यं भवति ।

व्याख्या--विप्राणां=ब्राह्मणानां, ज्ञानतः=ज्ञानेन, क्षत्रियाणां
राजन्यानां, वीर्यतः,=पराक्रमेण, वैश्यानां, धान्यधनतः=धान्यादिधने
शूद्राणामेव=शूद्रजातीयानामवराणां, जन्मतः=उत्पत्तेः ज्यैष्ठ्यं=श्रेष्ठ
( भवति इति ज्ञेयम् )।

अर्थ—ब्राह्मणों में ज्ञान से, क्षत्रियों में पराक्रम से, वैश्यों में धन
अधिकता से श्रेष्ठत्व का विचार किया जाता है केवल शूद्रों में ही आयु
श्रेष्ठता का निर्णय किया जाता है ॥१५५॥

बाल पक जाने से बृद्ध नहीं होता—

न तेन बृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥१५६॥

अन्वय—येन अस्य शिरः पलितं, तेन बृद्धः न भवति यः युवा अ
अधीयानः देवाः तं स्थविरं विदुः ।

अर्थ—'कोई भी मनुष्य शिर के बालों के पक जाने से बड़ा नहीं क
जा सकता, किन्तु उससे अवस्था में कम भी युवा पुरुष विद्या में अधिक ह
से बड़ा हो सकता हैं,' ऐसा देवताओं ने कहा है ॥१५६॥

मूर्ख ब्राह्मण की निन्दा—

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥१५७॥

अन्वय—यथा काष्ठमयः हस्ती, यथा चर्ममयः मृगः,यः विप्रः अनधीया
च, ते त्रयः नाम बिभ्रति ।

व्याख्या—यथा=येन प्रकारेण, [ काष्ठस्य विकारः ] काष्ठमयः
काष्ठनिर्मितः, हस्ती=दन्ती, यथा ( वा ) [ चर्मणः विकारः ] चर्ममयः
चर्म निर्मितः मृगः भवति, यः विप्रः [ न अधीयानः ]=वेदाध्ययनरहि
ते त्रयः अपि, नाम=नाममात्रं, बिभ्रति=धारयन्ति ।

अर्थ—काठ का बना हुआ हाथी, चमड़े का मृग तथा वेदाध्ययन-
ब्राह्मण ये तीनों नाममात्र से ही हाथी, हरिण तथा ब्राह्मण कहे जाते
इनसे कोई काम नहीं लिया जा सकता ॥१५७॥

यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ १५८ ॥

अन्वय—यथा स्त्रीषु षण्डः अफलः, यथा गौः गवि अफला, यथा च अज्ञे दानम् अफलं, तथा अनृचः विप्रः अपि अफलः ।

व्याख्या—यथा=येन प्रकारेण, स्त्रीषु=नारीषु, षण्डः=क्लीबः, अफलः=फलरहितः, यथा गौः गवि, अफला=निष्फला, यथा च अज्ञे=मूर्खे [ दीयते इति ] दानं=त्यागः, अफलं=निष्फलं, तथा=तेन प्रकारेण, अनृचः=वेद-वेदाङ्गादिज्ञानरहितः, विप्रः=ब्राह्मणः, अफलः=निष्फलः ।

अर्थ—जिस प्रकार नपुंसक स्त्रियों में, गाय गायों में ( गर्भधारण आदि की योग्यता न होने से ) निष्फल है अथवा जिस प्रकार मूर्ख को दिये गये दान का कोई फल नहीं होता उसी प्रकार वेदशास्त्रादि के ज्ञान से शून्य ब्राह्मण भी निष्फल ही है ॥ १५८ ॥

शिष्योपदेश का प्रकार—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१५९॥

अन्वय—धर्मम् इच्छता भूतानाम् अहिंसयैव श्रेयः अनुशासनं कार्यम्, मधुरा श्लक्ष्णा वाक् प्रयोज्या ।

व्याख्या—धर्मम् इच्छता=अभिलषता पुरुषेण, भूतानाम्=प्राणिनाम्, अहिंसयैव=दययैव, [ श्रेयसेऽनुशासनं ] श्रेयोनुशासनम्=कल्याणोपदेशः, कार्यं=कर्त्तव्यम्, मधुरा=प्रिया, श्लक्ष्णा=कोमला, वाक्=वाणी च, प्रयोज्या=वक्तव्या ।

अर्थ—धर्म की इच्छा रखने वाले पुरुष को चाहिये कि अहिंसा से ही प्राणियों के कल्याण का उपदेश करें तथा उनसे मधुर और कोमल वाणी का व्यवहार करें ॥ १५९ ॥

वेदान्त का फल किसे मिलता है—

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥१६०॥

**अन्वय**—यस्य वाङ्मनसी शुद्धे, सर्वदा सम्यक् गुप्ते च सः वेदान्तोपगतं सर्वं फलं वै अवाप्नोति ।

**व्याख्या**—यस्य=पुरुषस्य, [वाक् च मनश्च] वाङ्मनसी=वाणी चित्त च, शुद्धे-कपटरहिते, सर्वदा सम्यक् = सुष्ठुप्रकारेण, गुप्ते च = वशीभूते च, सः=पुरुषः, [ वेदस्यान्तः वेदान्तस्तत्र उपगतं ] वेदान्तोपगतं=वेदान्ते प्रतिपादितं, भुक्तिमुक्त्यादिकं, सर्वं फलं वै अवाप्नोति=प्राप्नोति ।

**अर्थ**—जिस मनुष्य की वाणी एवं मन पवित्र हैं, और वश में रहने वाले हैं, वह वेदान्त में कहे गये समस्त फलको प्राप्त कर करता है ॥ १६० ॥

**नारुन्तुदः स्यादार्तोऽपि न परद्रोहकर्मधीः ।**
**ययाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥१६१॥**

**अन्वय**—आर्त्तः अपि अरुन्तुदः न स्यात्, परद्रोहकर्मधीः अपि न (स्यात्) अस्य यया वाचा (लोकः) उद्विजते, अलोक्यां तां (वाचं) न उदीरयेत् ।

**व्याख्या**—आर्त्तः=दुःखितः अपि, [ अरुन्तुदतीति ] अरुन्तुदः=मर्मभेत्ता, न स्यात्=न भवेत्, [परस्य द्रोहः परद्रोहः, परद्रोहस्य कर्म परद्रोहकर्म तस्मिन् धीर्यस्य सः ] परद्रोहकर्मधीः=परद्रोहकारकबुद्धियुक्तः ( अपि ) न ( स्यात् ), अस्य, यया वाचा=येन वचनेन, ( लोकः ) उद्विजते=उद्विग्नो भवति, [ लोकाय हिता लोक्या, न लोक्या अलोक्या, ताम्] अलोक्यां=लोकमङ्गलकारिणीं, तां वाचं=तद् वचनम्, न उदीरयेत्=न ब्रूयात् ।

**अर्थ**—स्वयं दुःखी होते हुए भी दूसरों के मर्म को दुःख देनेवाली बात न कहे और दूसरों से द्रोहबुद्धि भी न करे । जिस वाणी से किसी को उद्वेग (भय) पैदा हो ऐसी अमङ्गलकारिणी वाणी का प्रयोग भी न करे ॥ १६१ ॥

### सम्मान से डर और अपमान की चाह—

**सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव ।**
**अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ १६२ ॥**

**अन्वय**—ब्राह्मणः सम्मानात् विषादिव नित्यम् उद्विजेत, अवमानस्य च अमृतस्य इव नित्यम् आकाङ्क्षेत् ।

व्याख्या—ब्राह्मणः [ सम्यङ् मानं, तस्मात् ] सम्मानात्=समादरात्, विषादिव उद्विजेत=उद्विग्नो भवेत्, अवमानस्य च=अपमानस्य च, अमृतस्य इव नित्यम्=प्रतिदिनम्, आकाङ्क्षेत्=अभिलषेत् ।

अर्थ—ब्राह्मण सम्मान से विषके समान डरता रहे किन्तु अवमान की आकांक्षा अमृत प्राप्ति के सदृश नित्य करे ।।१६२।।

पूर्वोक्त में कारण--

सुखं ह्यवमतः शेते सुखं च प्रतिबुद्धयते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ।।१६३।।

अन्वय--हि अवमतः सुखं शेते, सुखं च प्रतिबुध्यते, अस्मिन् लोके, सुखं चरति च (किन्तु) अवमन्ता विनश्यति ।

व्याख्या—हि=यतः, अवमतः=अपमानितः, सुखं=सुखेन, शेते=निद्राति, सुखं च, प्रतिबुध्यते=जागृतो भवति । अस्मिन् लोके सुखं, चरति=च, किन्तु अवमन्ता=अपमानकारकः विनश्यति=नाशं गच्छति ।

अर्थ—अपमान को सह लेने वाला पुरुष सुख से सोता है, सुख से जागता है तथा सुखपूर्वक लोक में विचरण करता है किन्तु अपमान करनेवाला शीघ्र ही नष्ट हो जाता है ।।१६३।।

तपस्याका संचयन—

अनेन धर्मयोगेन संस्कृतात्मा द्विजः शनैः ।
गुरौ वसन्सञ्चिनुयाद् ब्रह्माधिगमिकं तपः ।।१६४।।

अन्वय—अनेन क्रमयोगेन संस्कृतात्मा द्विजः गुरौ वसन् शनैः ब्रह्माधिगमिकं तपः संचिनुयात् ।

व्याख्या—अनेन=पूर्वोक्तेन, क्रमयोगेन=जातकर्मारभ्योपनयनपर्यन्तेन [ संस्कृत आत्मा यस्य सः ] संस्कृतात्मा=विशुद्धशरीरः, द्विजः=ब्राह्मणः, गुरौ=गुरुकुले, वसन्=वासं कुर्वन्, शनैः=मन्दं मन्दं [ ब्रह्मणः अधिगमः येन तत् ] ब्रह्माधिगमिकं=ब्रह्मप्राप्तिकरं तपः=तपस्यां, संचिनुयात्=संगृह्णीत ।

अर्थ--उपर्युक्त संस्कारों से शुद्ध शरीरवाला ब्राह्मण गुरुकुल में निवास करता हुआ वेद की प्राप्ति के लिये तप का सञ्चय करे ।।१६४।।

समग्र वेद पढ़ना चाहिये—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥१६५॥

अन्वय—द्विजन्मना विधिचोदितैः तपोविशेषैः विविधैः व्रतैश्च सरहस्यः कृत्स्नः वेदः अधिगन्तव्यः।

व्याख्या--द्विजन्मना=ब्राह्मणेन, [विधिना चोदिता, विधिचोदितास्तैः] विधिचोदितैः=शास्त्रोक्तैः, [तपसां विशेषाः तपोविशेषास्तैः] तपोविशेषैः= इन्द्रियसंयमनादिभिः, विविधैः=अनेकैः, व्रतैः=नियमैः [रहस्येन सहितः] सरहस्यः=उपनिषत्सहितः, कृत्स्नः=संपूर्णः, वेदः अधिगन्तव्यः ज्ञातव्यः।

अर्थ--ब्राह्मण, शास्त्रोक्त अनेक प्रकार की तपस्या तथा नियमों का पालन करता हुआ उपनिषत् सहित समस्त वेदों का अध्ययन करे ॥१६५॥

ब्राह्मणका उत्कृष्ट तप--

वेदमेव सदाऽभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥१६६॥

अन्वय--द्विजोत्तमः तपः तप्स्यन् वेदम् एव सदा अभ्यसेत्, हि इह विप्रस्य वेदाभ्यासः परं तपः उच्यते।

व्याख्या—द्विजोत्तमः=वेदविद् विप्रः तपः=शरीरकार्श्यादि, तप्स्यन्= आचरन्, सदा=सर्वदा, अभ्यस्येत्=अभ्यासं कुर्यात्। हि=यतः, इह-संसारे, विप्रस्य=ब्राह्मणस्य, [वेदानामभ्यासः] वेदाभ्यासः=निरन्तरं वेदाध्ययनम्, परम्=उत्कृष्टः तप उच्यते=कथ्यते।

अर्थ—ब्राह्मण तपस्या को करता हुआ वेदों का अभ्यास करे, क्योंकि वेदाभ्यास ही ब्राह्मण का श्रेष्ठ तप है ॥१६६॥

वेदाभ्यासकी प्रशंसा--

आ हैव स नखाग्रेभ्यः परमं तप्यते तपः।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायः शक्तितोऽन्वहम् ॥१६७॥

अन्वय--यः स्रग्वी अपि द्विजः शक्तितः अन्वहं स्वाध्यायम् अधीते, स आनखाग्रेभ्यः एव ह परमं तपः तप्यते।

**व्याख्या**—यः = द्विजः, स्रग्वी=मालाधारी, अपि, शक्तितः=सामर्थ्यानुसारेण, अन्वहं = प्रतिदिनं, स्वाध्यायं = वेदाध्ययनं, अधीते, सः = द्विजः [नखाग्रमभिव्याप्येत्यानखाग्रं, तेभ्यः] आनखाग्रेभ्यः = चरणनखपर्यन्तं, एव ह परमम् = उत्कृष्टं, तपः तप्यते ।

**अर्थ**—जो ब्राह्मण माला धारण कर शक्ति के अनुसार वेदों का स्वाध्याय करता है वह केश से लेकर पैर तक बहुत बड़ा तप करता है ॥ १६७ ॥

वेद के विना अन्य शास्त्राभ्यास निषिद्ध--

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १६८ ॥

**अन्वय**--यः द्विजः वेदम् अनधीत्य अन्यत्र श्रमं कुरुते, स जीवन् एव सान्वयः शूद्रत्वम् आशु गच्छति ।

**व्याख्या**—यः द्विजः = ब्राह्मणः, वेदम् अनधीत्य = स्वाध्यायमकृत्वा, अन्यत्र=वेदातिरिक्तविषये, श्रमं = परिश्रमं कुरुते, सः जीवन्-प्राणान् धारयन्, एव=अपि, [अन्वयेन=सहितः] सान्वयः=सर्वशः शूद्रत्वम्, आशु=शीघ्रं, गच्छति ।

**अर्थ**—जो ब्राह्मण वेद को छोड़कर किसी दूसरे विषय में परिश्रम करता है वह जीता हुआ भी बंश सहित शूद्रता को प्राप्त कर लेता है ॥ १६८ ॥

द्विजत्व का निरूपण—

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९ ॥

**अन्वय**—श्रुतिचोदनात् द्विजस्य अग्रे मातुः अधिजननं मौञ्जीबन्धने द्वितीयं, ( अधिजननं ), यज्ञदीक्षायां तृतीयम् ( अधिजननं ) भवति ।

**व्याख्या**--श्रुतिचोदनात् = वेदानुसारेण, द्विजस्य = ब्राह्मणस्य, अग्रे = प्रथमम्, मातुः=मातृसकाशात्, अधिजननम् = उत्पत्तिः, ( भवति ) [मौञ्ज्या बन्धनं तस्मिन्,] मौञ्जिबन्धने=यज्ञोपवीतसंस्कारे, द्वितीयं (अधिजननं भवति) [यज्ञस्य दीक्षा यज्ञदीक्षा, तस्यां] यज्ञदीक्षायां, तृतीयं (ऊधिजननं भवति) ।

**अर्थ**—वेद की आज्ञानुसार ब्राह्मण का पहला जन्म माता से, दूसरा जन्म यज्ञोपवीत संस्कार से तथा तीसरा जन्म यज्ञ में दीक्षा लेने से होता है ॥१६९॥

### द्वितीय जन्म के माता-पिता--

तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ १७० ॥

अन्वय--तत्र अस्य मौञ्जीबन्धनचिह्नितं यद् ब्रह्मजन्म, तत्र सावित्री अस्य माता, आचार्यः तु पिता उच्यते ।

व्याख्या--तत्र=त्रिषु जन्मसु मध्ये, अस्य=शिशोः [मौञ्ज्या बन्धनं मौञ्जीबन्धनं, तेन चिह्नितं] मौञ्जीबन्धनचिह्नितं=मौञ्जीबन्धनेन कृतचिह्नम्, यत् [ब्रह्मणे जन्म] ब्रह्मजन्म=वेदग्रहणाय जन्म, तत्र=द्वितीयजन्मनि, सावित्री=गायत्री, अस्य माता=जननी, [आचरति आचारयति वेति द्विजातेः] आचार्यः=वेदोपदेष्टा, पिता=जनकः, उच्यते=कथ्यते ।

अर्थ--इन तीन जन्मों में यज्ञोपवीत के चिह्न वाला वेदाधिकार रूप जो द्वितीय जन्म है, उसमें सावित्री उसकी माता तथा आचार्य उसका पिता कहा जाता है ॥ १७० ॥

### आचार्य का पितृत्व क्यों—

वेदप्रदानादाचार्यं पितरं परिचक्षते ।
न ह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ॥१७१॥

अन्वय--वेदप्रदानात् आचार्यं पितरं परिचक्षते, हि अस्मिन् आ मौञ्जिबन्धनात् किञ्चित् कर्म न युज्यते ।

व्याख्या—[वेदस्य प्रदानं वेदप्रदानं, तस्मात्] वेदप्रदानात्=वेदाध्यापनात्, आचार्यं=वेदोपदेष्टारं, पितरं=जनकं, परिचक्षते=कथयन्ति । हि=यतः, अस्मिन्=बालके [मौञ्ज्या बन्धनं मौञ्जीबन्धनं, मौञ्जीबन्धनमभिव्याप्येत्या मौञ्जीबन्धनं, तस्मात्,] आ मौञ्जीबन्धनात्=मौञ्जीबन्धनकर्मणः प्राक्, किञ्चित् कर्म न युज्यते=न युक्तम् ।

अर्थ—वेदाध्यापन के कारण ही आचार्य को पिता कहा जाता है, क्योंकि यज्ञोपवीत होने के पहले ब्राह्मण को किसी भी वैदिक कर्म में अधिकार नहीं है ॥ १७१ ॥

अनुपनीत को वेदमंत्रोच्चारण निषेध--

नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥

अन्वय—स्वधानिनयाद् ऋते ब्रह्म न अभिव्याहरेत्, हि यावद् वेदे ( अधिकारः ) न जायते, तावत् शूद्रेण समः ( भवति ) ।

व्याख्या—[ स्वधा निनयनं यस्मिन्, तस्मात् ] स्वधानिनयनात्=श्राद्धमन्त्रात् ऋते, हि=यतः, यावत्=यावत्कालपर्यन्तं, वेदे=वेदाधिकारे, न जायते=नोत्पन्नो भवति-तावत्, शूद्रेण समः=शूद्रतुल्यः ।

अर्थ—जब तक यज्ञोपवीत न हो तब तक श्राद्धमन्त्रों के अतिरिक्त किसी भी वेद-मन्त्र का उच्चारण न करे । क्योंकि जब तक वेदाधिकार की सिद्धि के लिये यज्ञोपवीत नहीं हो जाता तब तक वह शूद्रके समान समझा जाता है ॥ १७२ ॥

यज्ञोपवीती को ही वेदाधिकार--

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥ १७३ ॥

अन्वय—कृतोपनयनस्य अस्य व्रतादेशनं क्रमेण विधिपूर्वकं ब्रह्मणः ग्रहणं चैव इष्यते ।

व्याख्या—[कृतमुपनयनं यस्य तस्य] कृतोपनयनस्य=विहितयज्ञोपवीत-संस्कारस्य, अस्य=बालस्य, [ व्रतस्यादेशनं ] व्रतादेशनं=भूशय्यासन्ध्योपासनादिकं कर्म क्रमेण विधिपूर्वकं=शास्त्रोक्ताचमनादि पूर्वाभिमुखोंकारोच्चारणादि-पूर्वकं, ब्रह्मणः=वेदस्य, ग्रहणं=अध्ययनम्, इष्यते=अभिलष्यते ।

अर्थ—यज्ञोपवीत के पश्चात् ही बालक को सन्ध्योपासनादिरूप नियम का आचरण तथा विधिपूर्वक वेदाध्ययन करना चाहिये ॥ १७३ ॥

पूर्वोक्त अजिनादि का ही व्रतों में धारण—

यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४ ॥

अन्वय—यस्य यत् चर्म यत् सूत्रं विहितं, या च मेलखा, ( यः ) दण्डः, यच्च वसनं, ( विहितं )तत् तत् अस्य व्रतेषु अपि ( ज्ञेयम् ) ।

**व्याख्या**--यस्य=ब्राह्मणादिवर्णस्य, यत् चर्म=अजिनं, यत् सूत्रं=कार्पासादि, विहितं=पूर्वमुक्तं, एवं या च मेखला, यश्च दण्डः यच्च वसनं=वस्त्रं, विहितं=उक्तं, तत् तत् अस्य व्रतेषु=अनुष्ठानेषु अपि ज्ञेयम् ।

**अर्थ**—( पूर्व श्लोक ४१-४७ में ) ब्रह्मणादि ब्राह्मचारियों के लिये जो चर्म, सूत्र, मेखला, दण्ड तथा वस्त्र कहे गये हैं, वही सब उसके व्रतों ( अनुष्ठानकाल ) में भी होने चाहिये ॥ १७४ ॥

### तपोवृद्धि के लिये नियम पालन—

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १७५ ॥

**अन्वय**—ब्रह्मचारी गुरौ आत्मनः तपोवृद्ध्यर्थम् इन्द्रियग्रामं सन्नियम्य इमान् नियमान् तु सेवेत ।

**व्याख्या**—ब्रह्मचारी, गुरौ=गुरुकुले वसन्=वासं कुर्वन्; आत्मनः=स्वस्य [तपसो वृद्धिः, तपोवृद्धिः तपोवृद्धये प्रयोजनाय इति ] तपोवृद्ध्यर्थम्=तपोवर्धनप्रयोजनाय, [ इन्द्रियाणां ग्रामः तम् ] इन्द्रियग्रामं=इन्द्रियसमूहं, संयम्य=नियम्य, इमान्=अग्रे कथितान्, नियमान्, सेवेत=आचरेत् ।

**अर्थ**--गुरुकुल में निवास करता हुआ अपनी तपस्या को बढ़ाने के लिये इन्द्रियों को वश में रखे तथा आगे कहे हुए नियमों का पालन करे ॥ १७५ ॥

### नित्यकर्मों का विधान--

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताऽभ्यर्चनं चैवा समिदाधानमेव च ॥ १७६ ॥

**अन्वय**—नित्यं स्नात्वा शुचिः देवर्षिपितृतर्पणं देवताभ्यर्चनं समिदाधानञ्च कुर्यात् ।

**व्याख्या**—नित्यं, स्नात्वा, शुचिः=शुद्धो भूत्वा [ देवाश्च, ऋषयश्च पितरश्च देवर्षिपितरस्तेषां तर्पणं, तत् ] देवर्षिपितृतर्पणं=देवर्षिपितॄनुद्दिश्य जलदानम्, [ देवतानामभ्यर्चनं ] देवताभ्यर्चनं=देवपूजनं [ समिदामाधानं ] समिदाधानं=होमं च कुर्यात् ।

अर्थ--ब्रह्मचारी नित्य ही स्नानकर पवित्र हो देवता, ऋषि तथा पितरों का अधिकारानुसार तर्पण करे, फिर देवताओं का पूजन कर होम करे ॥१७६॥

वर्जनीय कर्म—

वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥१७७॥

अन्वय—ब्रह्मचारी मधु मांसं गन्धं माल्यं, रसान्, स्त्रियः च, यानि सर्वाणि शुक्तानि, प्राणिनां हिंसनं चैव वर्जयेत् ।

व्याख्या—मधु = मद्यं, माक्षिकं वा, गन्धं, माल्यं रसादीन् = लवणगुडादीन् स्त्रियः = नारीः, यानि सर्वाणि शुक्तानि = विकृत्याम्लीभूतानि वस्तूनि, प्राणिनां=भूतानां, हिंसनं = प्राणवियोगानुकूलव्यापारं च वर्जयेत् = त्यजेत् ।

अर्थ—ब्रह्मचारी मधु, मांस, सुगन्धित इत्रादि तैल, फूलों का हार, लवण, गुड़, रूढ़कर विकृत हुई वस्तु तथा प्राणियों का वध, इन सभी कर्मों को छोड़ देवे ॥१७७॥

अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं नर्तनं गीतवादनम् ॥१७८॥

अन्वय--(ब्रह्मचारी) अभ्यङ्गम्, अक्ष्णोः अञ्जनं च, उपानच्छत्रधारणं, कामं क्रोधं च, लोभं नर्त्तनं गीतवादनं च ( वर्जयेत् ) ।

व्याख्या--( ब्रह्मचारी ) [ अभ्यज्यतेऽनेनेति ] अभ्यङ्गम् = शरीरमर्दनं, अक्ष्णोः = नेत्रयोः, अञ्जनं, [ उपानच्च छत्रं च उपानच्छत्रे, तयोः धारणम् ] उपानच्छत्रधारणम् = उपानदातपत्रग्रहणं, कामम् = विषयाभिलाषं, क्रोधं = कोपं, लोभं = परद्रव्यादिवाञ्छनं, नर्त्तनं = हावभावादिपूर्वकं गात्रविक्षेपादि, [ गीतं च वादनं चानयोः समाहारः ] गीतवादनम् = गायनं बादनं च, ( वर्जयेत् ) ।

अर्थ--ब्रह्मचारी तेलादि से शरीर का मर्दन, नेत्र में आँजन, जूता, छाता, काम-क्रोध-लोभ, नाचना, गाना तथा बजाना इन सभी कर्मों को न करे ॥१७८॥

द्यूतं च जनवादं च परिवादं तथाऽनृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥१७९॥

अन्वय--( ब्रह्मचारी ) द्यूतं जनवादं च परिवादं तथा अनृतम्, स्त्रीणां प्रेक्षणं आलम्भं परस्य उपघातं च ( वर्जयेत् ) ।

व्याख्या--द्यूतं=अक्षक्रीडां, जनवादं=जनैः सह वाक्कलहं, परिवादं=निन्दाम् तथा अनृतम्=असत्यम्, स्त्रीणां=नारीणां, प्रेक्षणं=सकामदर्शनं, आलम्भं=सकामस्पर्शं, परस्य=अन्यस्य उपघातं=कार्यहानिं च (वर्जयेदिति)

अर्थ--ब्रह्मचारी जूआ, झगड़ा, दूसरे की निन्दा, असत्यभाषण, स्त्रियों को सकाम देखना और उनका स्पर्श करना तथा दूसरों की बुराई इन सभी कर्मों को न करे ॥१७९॥

### इच्छापूर्वक वीर्यपातका निषेध--

एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥१८०॥

अन्वय--( ब्रह्मचारी ) सर्वत्र एकः शयीत, क्वचित् रेतः न स्कन्दयेत्, हि कामात् रेतः स्कन्दयन् आत्मनः व्रतं हिनस्ति ।

व्याख्या--( ब्रह्मचारी ) सर्वत्र=सर्वस्मिन्नपि काले, एकः=एकाकी शयीत=सुप्यात्, क्वचित्=कुत्रापि स्वेच्छया स्वप्नादौ नारीषु वा, रेतः=वीर्यं न स्कन्दयेत्=न प्रस्रवयेत्, हि=यतः, कामात्=इच्छया, रेतः=शुक्रं, स्कन्दयन्=पातयन्, आत्मनः=स्वस्य, व्रतं=नियमम्, हिनस्ति=नाशयति ।

अर्थ--ब्रह्मचारी सभी कालों में अकेला शयन करे, कहीं भी अपने वीर्य-को न गिरावे । जो ब्रह्मचारी स्वेच्छा से मोह के कारण अपने वीर्यको गिरा देता है वह अपने व्रत ( नियम ) का नाश कर देता है ॥१८०॥

### स्वप्नदोषपर प्रायश्चित्त--

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥१८१॥

अन्वय--ब्रह्मचारी द्विजः अकामतः स्वप्ने शुक्रं सिक्त्वा, स्नात्वा, अर्कम् अर्चयित्वा 'पुनर्मामिति' ऋचम् त्रिः, जपेत् ।

व्याख्या—ब्रह्मचारी, द्विजः=ब्राह्मणः, अकामतः=अनिच्छया, स्वप्ने, शुक्रं=रेतः सिक्त्वा=पातयित्वा, स्नात्वा, अर्कं=सूर्यम्, अर्चयित्वा=पूज-

यित्वा, पुनर्मामिति='पुनर्मामैत्विन्द्रियम्' इत्येवंरूपां ऋचम्=वेदमन्त्रम्, जपेत्=जपं कुर्यात् ।

अर्थ—ब्रह्मचारी ब्राह्मण स्वप्न में बिना इच्छा के वीर्य के गिर जानेपर स्नानकर सूर्यका पूजन करे, फिर 'पुनर्मामैत्विन्द्रियम्' इस ऋचा का तीन बार जप करे ।। १८१ ।।

**दैनिक कर्तव्य--**

**उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।**
**आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ।। १८२ ।।**

**अन्वय**--उदकुम्भं, सुमनसः, गोशकृत्, मृत्तिका, कुशान् यावदर्थानि, आहरेत् अहरहः भैक्षं च चरेत् ।

**व्याख्या**--(ब्रह्मचारी) [उदकस्य कुम्भं] उदकुम्भं=सजलघटं, सुमनसः =पुष्पाणि [ गवां शकृतः=गोमयानि, गोशकृतश्च मृत्तिकाश्च कुशाश्च तान् ] गोशकृन्मृत्तिकाकुशान्=गोमयमृत्कुशान्, [ यावन्ति अर्थानि ] यावदर्थानि =प्रयोजनमात्राणि, आहरेत्=आनयेत्, अहरहः=प्रतिदिनं, [ भिक्षायाः समूहः ] भैक्षं च चरेत्=अर्जयेत् ।

**अर्थ**--ब्रह्मचारी जलपूर्ण घट, पुष्प, गोबर, मिट्टी, तथा कुश इनको जितना काम हो उतना लावे और नित्य भिक्षाटन भी करे ।। १८२ ।।

भिक्षार्ह गृह—

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ।। १८३ ।।

**अन्वय**—ब्रह्मचारी वेदयज्ञैः अहीनानां, स्वकर्मसु प्रशस्तानां गृहेभ्यः अन्वहं प्रयतः सन् भैक्षम् आहरेत् ।

**व्याख्या**—ब्रह्मचारी=सोपनयनो द्विजः [ वेदाश्च यज्ञाश्च वेदयज्ञास्तैः ] वेदयज्ञैः=स्वाध्यायहोमबलिवैश्वदेवातिथिभोजनरूपैः, अहीनानां=अरहितानां [स्वस्य कर्माणि स्वकर्माणि तेषु] स्वकर्मसु=स्ववर्णविहितधर्मेषु, प्रशस्तानां= प्रकर्षेण तत्पराणां, गृहेभ्यः=गेहेभ्यः, अन्वहं=प्रतिदिनं, प्रयतः=नियमतः, भैक्षम् आहरेत्=याचेत ।

अर्थ—ब्रह्मचारी को चाहिये कि जिनके घर में नित्य स्वाध्याय, होम, बलि, वैश्वदेवातिथिभोजन रूप ब्रह्मयज्ञ होते हों तथा जो अपने वर्ण-धर्म के अनुकूल आचरण करनेवाले हों ऐसे गृहस्थों के घर से नियमपूर्वक भिक्षा ग्रहण करें ॥ १८३ ॥

भिक्षानर्ह स्थान—

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ १८४ ॥

अन्वय—गुरोः कुले न भिक्षेत, ज्ञातिकुलबन्धुषु न ( भिक्षेत ), अन्य-गेहानाम्, अलाभे पूर्वं पूर्वं विवर्जयेत् ।

व्याख्या—गुरोः आचार्यस्य, कुले=वंशे न भिक्षेत=न याचेत, [ ज्ञातयश्च कुलानि च बन्धवश्च तेषु ] ज्ञातिकुलबन्धुषु=सगोत्रवंशसहोदरादिषु न ( भिक्षेत ) [ अन्यानि च तानि गेहानि अन्यगेहानि तेषाम् ] अन्यगेहानां=अन्यगृहाणाम्, अलाभे=अप्राप्तौ तु, पूर्वं पूर्वम्=प्रथमं, विवर्जयेत्=त्यजेत् ।

अर्थ—अपने आचार्य के कुल में भिक्षा न मांगे, तथा सगोत्र कुल एवं भाई इत्यादि से भी भिक्षा ग्रहण न करे। यदि इनके अतिरिक्त दूसरा घर न मिले तो पहला पहला त्यागे। अर्थात् अन्य घर न मिलने पर भाई के घर में तदभाव में कुल में, कुल के न रहने पर ज्ञाति में तथा ज्ञातियों के भी न रहने पर गुरुकुल से भिक्षाटन करे ॥ १८४ ॥

अर्ह स्थानाभाव में विकल्प—

सर्वं वाऽपि चरेद् ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥

अन्वय—पूर्वोक्तानाम् असंभवे प्रयतः वाचं नियम्य सर्वं ग्रामं (भिक्षार्थं) चरेत्; अभिशस्तान् तु वर्जयेत् ।

व्याख्या—पूर्वोक्तानां=वेदयज्ञैरहीनानां, स्वकर्मसु प्रशस्तानां गृहमेधिनामभावे, प्रयतः=नियमतः, वाचं=वाणीं, नियम्य=अवरुध्य, सर्वं=सकलं ग्रामं भैक्षं चरेत्, अभिशस्तान्=निन्दितान् च, वर्जयेत् ।

**अर्थ**--यदि ब्रह्मयज्ञ करने वाले, अपने वर्णाश्रमानुसार धर्म-कर्म करने वाले सद्गृहस्थ न मिलें तो संपूर्ण ग्राम से भिक्षाटन कर लेना चाहिये, परन्तु महापातक से युक्त पापी मनुष्यों के घर कदापि भिक्षाटन न करे ॥१८५॥

**समिधा ग्रहण तथा हवन—**

**दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।**
**सायम्प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥**

**अन्वय**--(ब्रह्मचारी) समिधः दूरात् आहृत्य विहायसि सन्निदध्यात् । (किञ्च) अतन्द्रितः (सन्) ताभिः सायं प्रातश्च अग्नि जुहुयात् ।

**व्याख्या**--(ब्रह्मचारी) समिधः=काष्ठानि, दूरात्=दूरदेशात्, आहृत्य =समानीय, विहायसि=आकाशे, मञ्चादौ वा सन्निदध्यात्=स्थापयेत् । (किञ्च) [तन्द्रा सञ्जाता अस्येति, न तन्द्रितः] अतन्द्रितः=अनलसः, सायं प्रातश्च=उभयोः सन्ध्ययोः, अग्नि जुहुयात्=होमं कुर्यात् ।

**अर्थ**--ब्रह्मचारी दूर देश से गिरी हुई लकड़ियों को ले आकर आकाश अथवा मचान पर स्थापित करे और आलस्य रहित होकर उन समिधों से सायं प्रातः अग्नि में हवन करे ॥१८६॥

**न करनेपर अवकीर्णि व्रत—**

**अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।**
**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १८७ ॥**

**अन्वय**--( ब्रह्मचारी ) अनातुरः सन् सप्तरात्रं भैक्षचरणम् अकृत्वा पावकम् असमिध्य च अवकीर्णिव्रतं चरेत् ।

**व्याख्या**—( ब्रह्मचारी ) [न आतुरः] अनातुरः=स्वस्थः सन् [सप्तानां रात्रीणां समाहारः] सप्तरात्रं=सप्तदिवसपर्यन्तं, [भिक्षाणां समूहो भैक्षं, तस्य चरणम्] भैक्षचरणम्=भिक्षासम्पादनम्, अकृत्वा असंपाद्य, पावकम्=अग्नि असमिध्य=समिद्भिः होममकृत्वा च, [ अवकीर्णिनः व्रतं ] अवकीर्णिव्रतं= ब्रह्मचर्यव्रतलोपप्रायश्चित्तं चरेत्=कुर्यात् ।

**अर्थ**--ब्रह्मचारी यदि सात रात तक भिक्षाचरण एवं अग्नि में होम न करे तो उसे व्रत-लोप के लिये प्रायश्चित्त रूप में अवकीर्णिव्रत करना चाहिये ॥१८७॥

भिक्षान्न का ही नित्य भक्षण—

भैक्षेण वर्तयेन्नित्यं नैकान्नादी भवेद् व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ।। १८८ ।।

**अन्वय**–व्रती भैक्षेण नित्यं वर्तयेत्, एकान्नादी ( च ) न भवेत् । व्रतिनः भैक्षेण वृत्तिः उपवाससमा स्मृता ।

**व्याख्या**—[व्रतमस्यास्तीति] व्रती = ब्रह्मचारी, भैक्षेण = भिक्षान्नेन, नित्यं, वर्त्तयेत् = जीवननिर्वाहं कुर्यात् [ एकस्यान्नमेकान्नमेकान्नमत्तीति ] एकान्नादी = एकान्नभोजी, न भवेत्, व्रतिनः = ब्रह्मचारिणः, भैक्षेण, वृत्तिः = जीविका, [ उपवासेन समा ] उपवाससमा = उपवासतुल्या, स्मृता = कथिता।

**अर्थ**—ब्रह्मचारी भिक्षा से ही अपना निर्वाह करे । केवल एक मनुष्य के अन्न से कभी निर्वाह न करे । ब्रह्मचारी का भिक्षा से निर्वाह करना उपवास के समान फलदायक कहा है ।।१८८।।

[न भैक्षं परपाकः स्यान्न च भैक्षं प्रतिग्रहः ।
सोमपानसमं भैक्षं तस्माद् भैक्षेण वर्तयेत् ।। ९ ।।
भैक्षस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च ।
यांस्तस्य ग्रसते ग्रासांस्ते तस्य क्रतुभिः समाः ।। १० ।।]

**अर्थ**—दूसरे द्वारा पकाया हुआ तथा प्रतिग्रह (दान) भिक्षान्न नहीं माना जाता । भिक्षान्न सोमपान के समान है अतः ब्रह्मचारी भिक्षान्न ग्रहण करे ।।९।।

जिसका आगम (उपार्जन) शुद्ध रीति से हुआ है, ऐसा, प्रोक्षित (जिसमें जल छिड़का गया है) तथा हवन किए हुए (से शेष) भिक्षान्न के जिन ग्रासों को ब्रह्मचारी खाता है, वे यज्ञ के समान हैं ।।१०।।

पूर्वोक्त में अपवाद—

व्रतवद् देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयात् व्रतमस्य च लुप्यते ।। १८९ ।।

अन्वय–ब्रह्मचारी देवदैवत्ये अभ्यर्थितः व्रतवत्, पित्र्ये कर्मणि (अभ्यर्थितः) ऋषिवत् कामम् अश्नीयात् । (एवम्) अस्य व्रतं न लुप्यते ।

व्याख्या—ब्रह्मचारी [देवा देवता अस्मिन् तत्, तस्मिन्] देवदैवत्ये=देवकार्योद्देश्येन क्रियमाणे ब्राह्मणभोजनादौ (यजमानेन) अभ्यर्थितः=प्रार्थितः सन्, [व्रतेन तुल्यं] व्रतवत्=ब्रह्मचारिनियमवत्, (कामम् अश्नीयात्) (किञ्च) [पितुः भवं पित्र्यं, तस्मिन्] पित्र्ये=श्राद्धादौ वा, कर्मणि=कार्ये, अभ्यर्थितः, [ऋषिणा तुल्यं] ऋषिवत्=वैखानसवत्, कामम्=यथेष्टं, अश्नीयात्=निमन्त्रितोप्येकस्यान्नं भोजयेत्, एवम् अस्थ=ब्रह्मचारिणः, व्रतं=नियमः, न लुप्यते=न विलुप्तं भवति ।

अर्थ—ब्रह्मचारी देवकर्म में यजमान के द्वारा निमन्त्रित होने पर ब्रह्मचर्य नियमानुकूल यथेष्ट भोजन करे, इसी प्रकार पितृकार्य ( श्राद्ध ) में निमन्त्रित होने पर ऋषियों के समान ( आमिषवर्जित ) यथेष्ट भोजन करे तो उसके व्रत का लोप नहीं होता ॥१८९॥

ये नियम ब्राह्मण ब्रह्मचारी के लिये ही हैं—

ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥ १९० ॥

अन्वय—मनीषिभिः एतत् कर्म ब्राह्मणस्य एव उपदिष्टम्, राजन्यवैश्ययोः तु एवम् एतत् कर्म न विधीयते ।

व्याख्या—मनीषिभिः=विद्वद्भिः एतत् कर्म=दैवे पित्र्ये वा निमन्त्रितः सन् भोजनं, ब्राह्मणस्यैव=विप्रस्यैव, उपदिष्टम्=कथितम् [ राजन्यश्च वैश्यश्च राजन्यवैश्यौ, तयोः ], राजन्यवैश्ययोः=क्षत्रियवैश्यजात्योः, न एतत् कर्म=देव-पित्र्यादौ निमन्त्रितः सन् भोजनरूपं कार्यं, न विधीयते=न उपदिश्यते ।

अर्थ—विद्वानों ने देव तथा पितृकार्यों में यजमान के प्रार्थना करने पर भोजनरूप विधि केवल ब्राह्मण ब्रह्मचारी के लिये ही कहा है, अन्य क्षत्रिय तथा वैश्यके लिये नहीं कहा है ॥१९०॥

अवश्य कर्तव्यता—

चोदितो गुरुणा नित्यमप्रचोदित एव वा ।
कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ १९१ ॥

अन्वय—गुरुणा चोदितः अप्रचोदितः एव वा अध्ययने आचार्यस्य हितेषु च नित्यं यत्नं कुर्यात् ।

व्याख्या--गुरुणा=आचार्येण, चोदितः=प्रेरितः, अप्रचोदित एव= अप्रेरितो वा, अध्ययने=पठने, आचार्यस्य=गुरोः, हितेषु=हितकारककार्येषु वा, यत्नम्=उद्योगं, कुर्यात्=विदधीत ।

अर्थ--गुरु प्रेरणा करे या न करे ब्रह्मचारी सदैव पढ़ने में तथा गुरु के हितकारक कार्यों में यत्न करता रहे ॥१९१॥

**गुरु की आज्ञा का पालन—**

शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेदीक्षमाणो गुरोर्मुखम् ॥ १९२ ॥

अन्वय--शरीरं च वाचं च बुद्धीन्द्रियमनांसि च नियम्य एव प्राञ्जलिः गुरोः मुखं वीक्षमाणः तिष्ठेत् ।

व्याख्या--शरीरं च,=देहं च, वाचं च=वचनं च, [ बुद्धिश्च इन्द्रियाणि च मनश्च], बुद्धीन्द्रियमनांसि च नियम्य=संयम्य च, प्राञ्जलिः=विहिताञ्जलिः, गुरोः मुखं=आचार्यस्य मुखं, ईक्षमाणः=अवलोकमानः, तिष्ठेत् उपविशेत् ।

अर्थ--ब्रह्मचारी शरीर, वाणी, बुद्धि, ज्ञानेन्द्रिय तथा मन को अपने वश में रखकर हाथ जोड़े गुरुके मुखकी ओर देखते हुए उनके सामने खड़ा रहे ॥१९२॥

नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १९३ ॥

अन्वय—[शिष्यः] नित्यम् उद्धृतपाणिः साध्वाचारः सुसंयतः स्यात्, (गुरुणा) आस्यताम् इति उक्तः सन् गुरोः अभिमुखम् आसीत ।

व्याख्या--( शिष्यः ) नित्यम् [ उद्धृतः पाणिर्येन सः ] उद्धृतपाणिः= निर्गतहस्तः, [ साधुः आचारो यस्य सः ] साध्वाचारः=शिष्टाचारयुक्तः [ सुष्ठु संयतः ] सुसंयतः=वशीकृतेन्द्रियग्रामः स्यात्, ( गुरुणा ) आस्यताम् =उपविश्यताम्, इत्युक्तः सन्, गुरोः [मुखस्य संमुखम्] अभिमुखं=संमुखम् आसीत=उपविशेत् ।

अर्थ—ब्रह्मचारी को गुरु के समीप सदैव हाथ को उत्तरीयादि से बाहर निकालकर शिष्टाचार से संयुक्त हो अपनी इन्द्रियों को वश में रखकर सावधानी से खड़े रहना चाहिए और उनके द्वारा बैठने की आज्ञा होनेपर सामने ही किसी एक स्थान पर बैठ जाना चाहिये ॥ १९३ ॥

गुरुसे न्यूनतामें रहना—

हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ।
उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ॥ १९४ ॥

अन्वय—(ब्रह्मचारी) गुरुसन्निधौ सर्वदा (गुर्वपेक्षया) हीनान्नवस्त्रवेषः स्यात्, अस्य प्रथमम् उत्तिष्ठेत्, चरमं चैव संविशेत् ।

व्याख्या—ब्रह्मचारी [ गुरोः सन्निधिः गुरुसन्निधिः तस्मिन् ] गुरुसन्निधौ=गुरुसन्निधाने (तदपेक्षया) [हीनम् अन्नं वस्त्राणि वेषो वा यस्य सः] हीनान्नवस्त्रवेषः=अन्नेन वस्त्रेण वेषेण च न्यूनः भवेत् गुरोः ( उत्थानात् ) प्रथमं उत्तिष्ठेत्=विबुध्यात्, किञ्च गुरोः शयनात् चरमं=अन्ते च, संविशेत्= ( सुप्यात् ) ।

अर्थ—ब्रह्मचारी अन्न, वस्त्र तथा वेश में गुरु की अपेक्षा न्यून ही रहे । गुरु के सोने के बाद स्वयं शयन करे तथा उनके उठने के प्रथम ही शय्या त्याग देवें ॥ १९४ ॥

आज्ञा-पालन का प्रकार—

प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिर्यङ् न पराङ्मुखः ॥ १९५ ॥

अन्वय—शयानः न, आसीनः न; भुञ्जानः न, तिष्ठन् न, पराङ्मुखः न वा प्रतिश्रवणसंभाषे समाचरेत् ।

व्याख्या—[ शेते इति ] शयानः=स्वपन् न, आसीनः=स्थितः न, भुञ्जानः=भोजनं कुर्वन् न, तिष्ठन्न, पराङ्मुखः=प्रतिकूलमुखः न वा (प्रतिश्रवणं च संभाषा च ] प्रतिश्रवणसंभाषे = गुर्वाज्ञास्वीकरणं वार्त्तालापं वा, न समाचरेत् = न कुर्यात् ।

**अर्थ**--ब्रह्मचारी सोता हुआ, बैठा हुआ, भोजन करता हुआ, खड़ा हुआ अथवा गुरु से प्रतिकूल मुख कर कदापि उनकी आज्ञा का स्वीकार या अन्य वार्त्तालाप न करे ॥ १९५ ॥

आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥

**अन्वय**—आसीनस्य स्थितः, तिष्ठतः तु अभिगच्छन्, आव्रजतस्तु प्रत्युद्-गम्य, धावतस्तु पश्चाद् धावन् ( प्रतिश्रवणसंभाषे वा ) कुर्यात् ।

**व्याख्या**—आसीनस्य = आसने उपविष्टस्य गुरोः, स्थितः=तिष्ठन् सन्, तिष्ठतः = क्वचित् दूरे वर्त्तमानस्य गुरोः, अभिगच्छन् = संमुखे स्थितः सन्, आव्रजतः = आगच्छतः तु, प्रत्युद्गम्य सुस्वागतपूर्वकं तत् पार्श्वे गत्वा, धावतः= धावमानस्य गुरोः, पश्चात् धावन् = शीघ्रं गच्छन् एव ( प्रतिश्रवणसंभाषे ) कुर्यात् ।

**अर्थ**—ब्रह्मचारी को बैठे हुए गुरु के सामने खड़े होकर, खड़े हुए हों तो उनके सामने जाकर, आते हों तो स्वागत पूर्वक स्वयं उनके समीप जाकर और यदि वे दौड़ते हों तो दौड़कर प्रतिश्रवण तथा संभाषण करना चाहिये ॥१९६॥

पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥

**अन्वय**--ब्रह्मचारी पराङ्मुखस्य अभिमुखः; दूरस्थस्य अन्तिकम् एत्य, शयानस्य निदेशे तिष्ठतः, ( गुरोः ) प्रणम्य एव (प्रतिश्रवणसंभाषे कुर्यात् ) ।

**व्याख्या**—पराङ्मुखस्य = परावृत्य स्थितस्य, ( गुरोः ) ( शिष्यः, ) अभिमुखः = संमुखे स्थितः, [ दूरे तिष्ठतीति दूरस्थस्तस्य ] दूरस्थस्य = दूरे ( गुरोः ) अन्तिकम् = समीपम् एत्य = गत्वा, शयानस्य = स्वपतः, निदेशे = आज्ञायाम्, स्थितस्य = ददानस्य, वा गुरोः प्रणम्य = नमस्कृत्य प्रतिश्रवणसंभाषे कुर्यात् ।

**अर्थ**—ब्रह्मचारी गुरु के प्रतिकूल मुख स्थित होनेपर उनके सानने जाकर, दूर हों तो पास जाकर, सोते हों अथवा बैठकर कुछ आज्ञा देना चाहते हों तो उन्हें प्रणामकर उनसे आज्ञा का ग्रहण तथा वार्त्तालाप करे ॥ १९७ ॥

### आसन गुरु से नीचा हो—

नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १९८ ॥

अन्वय—गुरुसन्निधौ अस्य सर्वदा नीचं शय्यासनं च भवेत् गुरोः चक्षुर्विषये तु ( अयं ) यथेष्टासनो न भवेत् ।

व्याख्या—[ गुरूणां सन्निधिः गुरुसन्निधिस्तस्मिन् ] गुरुसन्निधौ = गुरुसमीपे अस्य = शिष्यस्य, सर्वदा, नित्यं, नीचं = अधः [ शय्या च आसनं चानयोः समाहारः ] शय्यासनं = शय्या आसनं च ( भवेत् ), गुरोः = आश्चार्यस्य, [ चक्षुषः विषयं चक्षुर्विषयं तस्मिन् ] चक्षुर्विषये = दृष्टिविषये च अयं शिष्यः, [ यथेष्टमासनं यस्य सः ] यथेष्टासनः = सुखोपविष्टः न भवेत् ।

अर्थ—ब्रह्मचारी गुरु के सन्निकट अपना शयन तथा आसन गुरु की अपेक्षा नीचे ही रखे और गुरु के सामने मनमाने ढंग से आसन पर न बैठे ॥ १९८ ॥

### गुरु के नामग्रहण व अनुकरण का निषेध—

नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥

अन्वय--( ब्रह्मचारी ) अस्य परोक्षम् अपि केवलं नाम न उदाहरेत्, अस्य गतिभाषितचेष्टितम् न चैव अनुकुर्वीत ।

व्याख्या--अस्य = आचार्यस्य, परं परोक्षं = प्रत्यक्षराहित्येऽपि केवलं = श्री-भट्ट-आचार्य-उपाध्यायादिरहितं, नाम = अभिधानं नैव उदाहरेत् = नोच्चारयेत् । अस्य = गुरोः, [ गतिश्च भाषितं च चेष्टितं च ] गतिभाषितचेष्टितम् = गमनाभाषाणभोजनादिरूपं व्यापारम्, न च एव अनुकुर्वीत = अनुकरणं न कुर्यात् ।

अर्थ--ब्रह्मचारी आचार्य के परोक्ष में भी केवल उनका नाम न उच्चारण करे तथा कभी भी अपने आचार्य के गमन, भाषण तथा चेष्टा आदि का अनुकरण न करे ॥ १९९ ॥

[ परोक्षं सत्कृपापूर्वं प्रत्यक्षं न कथञ्चन ।
दुष्टानुचारी च गुरोरिह वाऽमुत्र चैत्यधः ॥ ११ ॥ ]

अर्थ—परोक्ष में यदि गुरु का नाम लेना आवश्यक हो तो सम्मानसूचक विशेषण साथ में लगाकर ले और प्रत्यक्ष में तो कभी न ले। इसके विपरीत आचरण करने वाला इस लोक या परलोक में दुर्गति को प्राप्त होता है ॥ ११ ]

गुरुनिन्दा-श्रवण निषेध—

गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥२००॥

अन्वय—यत्र गुरोः परीवादः निन्दा वा अपि प्रवर्त्तते, (ब्रह्मचारिणा) तत्र कर्णौ पिधातव्यौ, ततः अन्यतः वा गन्तव्यम्।

व्याख्या—यत्र=यस्मिन् स्थाने, गुरोः=आचार्यस्य, परीवादः=संभूतदोषानुकथनं वा, निन्दा=गुणेषु दोषाविष्करणं वा, अपि भवेत् तत्र=तस्मिन् स्थाने, ब्रह्मचारिणा, कर्णौ=श्रवणौ, पिधातव्यौ=अङ्गुल्यादिना आच्छादयितव्यौ, ततः=तस्माद् देशात्, अन्यतः=अन्यस्मिन् देशे वा गन्तव्यम्=पलायितव्यम्।

अर्थ—जहाँ पर गुरु के ऊपर मिथ्या आक्षेप अथवा उनकी निन्दा की जाती हो, शिष्य को चाहिये कि वहाँ वह अपने कान बन्द कर ले, अथवा उस स्थान से हटकर दूर चला जाय ॥ २०० ॥

गुरु की बुराई करने का फल—

परीवादात्खरो भवति श्वा च भवति निन्दकः।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ २०१ ॥

अन्वय—परीवादात् खरो भवति, निन्दकः वै श्वा भवति, परिभोक्ता कृमिः भवति, मत्सरी कीटो भवति।

व्याख्या—शिष्यः परीवादात्=आक्षेपात् (गुरोः), खरः=गर्दभः, भवति, निन्दकः=गुणेषु दोषाविष्कारकः, निश्चयेन, श्वा=कुक्कुरः भवति, परिभोक्ता कृमिः=सूक्ष्मः कीटः भवति, मत्सरी=ईर्ष्याकरः, कीटः=स्थूलकृमिः, भवति=जायते।

अर्थ—शिष्य स्वयं गुरु के ऊपर आक्षेप करने से गधा, गुणों में दोषदृष्टि रखने से कुक्कुर, गुरु के धन आदि का उपभोग करने से सूक्ष्म कीट गुरु से डाह करने पर स्थूल कीट होता है, इसलिये गुरु की स्वयं निन्दा न करे ॥२०१॥

## गुरु की अर्चना का विधान—

दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

अन्वय--( शिष्यः ) दूरस्थः, क्रुद्धः, स्त्रियाः अन्तिके वा एनं न अर्चयेत् ( स्वयं ) यानासनस्थः च एनम् अवरुह्य अभिवादयेत् ।

व्याख्या--( शिष्यः ) स्वयं [ दूरे तिष्ठतीति ] दूरस्थः = दूरदेशस्थितः, क्रुद्धः = जातक्रोधः, स्त्रियाः = भार्यायाः, अन्तिके = समीपे वा, एनं = गुरुं, न अर्चयेत् = न पूजयेत्, स्वयं [ यानं च आसनं च यानासने, तयोः तिष्ठतीति ] यानासनस्थः = वाहनासनयोरुपविष्टः, एनं=गुरुम्, अवरुह्य = अवतीर्य, अभिवादयेत् = प्रणामं कुर्यात् ।

अर्थ--शिष्य दूर से स्थित होकर, क्रोधावस्था में, अथवा स्त्री के समीप कभी भी गुरु की पूजा न करे, यदि सवारी या किसी आसनपर स्वयं बैठा हो तो उतरकर प्रणाम करे ॥२०२॥

## गुरुके साथ कहाँ न बैठे—

प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्तयेत् ॥ २०३ ॥

अन्वय--शिष्यः प्रतिवाते अनुवाते च गुरुणा सह न आसीत, गुरोः असंश्रवे एव किञ्चित् अपि न कीर्त्तयेत् ।

व्याख्या--शिष्यः प्रतिवाते [ वातस्य प्रतिकूलं प्रतिवातं तस्मिन् ] प्रतिवाते = गुरुदेशात् शिष्यदेशमागच्छति वायौ-प्रतिकूलवायौ, [वातस्य पश्चादिति अनुवातस्तस्मिन् ] अनुवाते = शिष्यदेशात् गुरुदेशमागच्छति वायौ, गुरुणा = आचार्येण, सह = साकं, नासीत=नोपविशेत्, गुरोः आचार्यस्य [अविद्यमानः संश्रवो यत्र तस्मिन्] असंश्रवे = श्रवणायोग्यप्रदेशे वा स्थितः, किञ्चिदपि न कीर्तयेत् = न व्याहरेत् ।

अर्थ—प्रतिवात (प्रतिकूल-अर्थात् गुरु की ओर से शिष्य की ओर आनेवाली वायु) तथा अनुवात ( अनुकूल-शिष्य की ओर से गुरु की ओर आनेवाली-वायु) में गुरुके साथ न बैठे । जहाँ गुरुको सुनाई न पड़े इतनी दूर भी न बैठे ॥२०३॥

गुरुके समान आसनमें बैठनेके स्थान—

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ।। २०४ ।।

अन्वय—शिष्य: गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु शिलाफलकनौषु च गुरूणा सार्धम् आसीत।

व्याख्या--[ गावश्च अश्वाश्च उष्ट्राश्चेति गोऽश्वौष्ट्रास्तेषां यानम् गोऽश्वोष्ट्र यानम्, गोऽश्वोष्ट्रयानं च प्रासादाश्च प्रस्तराश्च तेषु ] गोऽश्वोष्ट्रयानप्रसादप्रस्तरेषु =गोयानाश्वयानोष्ट्रयानेषु प्रासादे प्रस्तरे वा। कटेषु=तृणनिर्मितेषु आसन-विशेषेषु वा, [ शिला च फलकं च नौश्च शिलाफलकनाव:, तासु ] शिलाफलक-नौषु=शिलायां काष्ठफलके नौषु च, गुरुणा=स्वाचार्येण सह, आसीत= उपविशेत्।

अर्थ--बैलगाड़ी, रथ, अथवा ऊँट गाड़ी, महल, पत्थर, चटाई, काठ का पल्ला अथवा नाव में शिष्य गुरु के साथ बैठ सकता है ।।२०४।।

गुरुवद् व्यवहार के योग्य—

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ।। २०५ ।।

अन्वय--( शिष्य: ) गुरो: गुरौ सन्निहिते गुरुवद् वृत्तिम् आचरेत्, गुरुणा अनिसृष्ट: च स्वान् गुरून् न अभिवादयेत्।

व्याख्या--( शिष्य: ) गुरो:=स्वाचार्यस्य, गुरौ=आचार्ये, सन्निहिते= सन्निकटे, [ गुरुणा तुल्यं ] गुरुवत्=गुरुसदृशं, वृत्तिम्=व्यवहारम्, आचरेत् =कुर्यात्, गुरुणा=स्वाचार्येण, अनिसृष्ट:=अनाज्ञप्त:, स्वान्=आत्मीयान्, गुरून्=पित्रादीन्, न अभिवादयेत्=न प्रणमेत्।

अर्थ---शिष्य को चाहिये कि यदि गुरु के गुरु सन्निकट में हों तो उनमें भी अपने आचार्य के समान ही व्यवहार करे। और गुरु की आज्ञा के बिना अपने माता पिता को भी प्रणाम न करे ।।२०५।।

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु।
प्रतिषेधत्सु चाधर्मान् हितं चोपदिशत्स्वपि ।। २०६ ।।

**अन्वय**- -शिष्येण विद्यागुरुषु स्वयोनिषु अधर्मान् च प्रतिषेधत्सु हितम् उपदिशत्सु च अपि एतदेव नित्या वृत्तिः ( वर्त्तितव्या ) ।

**व्याख्या**--( शिष्येण ) [ विद्यायाः गुरवः तेषु ] विद्यागुरुषु=उपाध्यायेषु, [स्वस्य योनयस्तासु] स्वयोनिषु=स्वगोत्रेषु, [ न धर्मास्तान् ] अधर्मान् =पापाचारान्, प्रतिषेधत्सु=प्रतिषेधं कुर्वत्सु, हितम्=उपकारकवचनं, उपदिशत्सु=उपदेशं कुर्वत्सु अपि, एतदेव=पूर्वोक्तैव, नित्या वृत्तिः=व्यवहारम्, वर्त्तितव्या ।

**अर्थ**—विद्या पढ़नेवालों में, अपने वंशवालों में, अधर्मका निषेध करने वालों में तथा धर्म का उपदेश करने वालों में पूर्वोक्त व्यवहार करना वृत्ति उचित है ।।२०६।।

श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु, चार्येषु, गुरोश्चैव स्वबन्धुषु ।। २०७ ।।

**अन्वय**—शिष्यः श्रेयःसु गुरुपुत्रेषु आर्येषु, गुरोः स्वबन्धुषु च गुरुवत् वृत्तिं नित्यम् आचरेत् ।

**व्याख्या**--श्रेयःसु [प्राशस्त्येन श्रेष्ठाः श्रेयांसः, तेषु] श्रेयःसु=सर्वश्रेष्ठेषु [गुरूणां पुत्राः गुरुपुत्रास्तेषु] गुरुपुत्रेषु=गुरुशिशुषु, आर्येषु=शिष्टेषु, गुरोः, स्वबन्धुषु=गुरुपरिवारेषु च, नित्यमेव=प्रतिदिनम् [ गुरुणा तुल्यं ] गुरुवद्, वृत्तिम्=व्यवहारम्, समाचरेत्=अनुतिष्ठेत् ।

**अर्थ**--बड़े लोगों में, गुरुपुत्र में, विद्वानों में, गुरु के बन्धु-बान्धवों में, गुरु के समान ही सदा व्यवहार करना चाहिये ।।२०७।।

बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ।। २०८ ।।

**अन्वय**–बालः समानजन्मा वा शिष्यो गुरुसुतः वा अध्यापयन् यज्ञकर्मणि गुरुवद् मानम् अर्हति ।

**व्याख्या**—बालः=अत्यल्पवयस्कः [समानं जन्म यस्य सः] समानजन्मा=समवयस्कः, शिष्यः=स्वशिष्यः वा गुरुसुतः=गुरुपुत्रः, अध्यापयन्=अध्यापनं कुर्वन् यज्ञकर्मणि=यागादौ, गुरुवत्=गुरुतुल्यं, मानं=समादरम्, अर्हति=योग्यो भवति ।

**अर्थ**—अवस्था में छोटा या समान अवस्थावाला गुरु का पुत्र यदि अपना शिष्य भी हो और वह अध्यापन करता हो या यज्ञकर्म में दीक्षित हो तो वह गुरुके समान ही आदर के योग्य होता है ॥२०८॥

गुरुपुत्र के अभ्यङ्गादि का निषेध—

उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ २०९ ॥

**अन्वय**--[ शिष्यः गुरुपुत्रस्य गात्राणाम् उत्सादनं स्नापनोच्छिष्टभोजने पादयोः अवनेजनं च न कुर्यात् ।

**व्याख्या**--[ गुरोः पुत्रः गुरुपुत्रस्तस्य ] गुरुपुत्रस्य=आचार्यसुतस्य, गात्राणाम्=शरीराणाम्, उत्सादनं=तैलादिना उद्वर्त्तनम् [स्नापनं च उच्छिष्ट-भोजनं च ] स्नापनोच्छिष्टभोजने=तस्य स्नापनं तदुच्छिष्टभक्षणं चेत्यर्थः, पादयोः=चरणयोः, अवनेजनं=प्रक्षालनं च न कुर्यात् ।

**अर्थ**--शिष्य गुरुपुत्र को तेल लगाना, उनको स्नान कराना, उनका उच्छिष्टभोजन और उनका पादप्रक्षालन न करे ॥२०९॥

गुरु की पत्नियों से व्यवहार—

गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ २१० ॥

**अन्वय**--गुरुयोषितः गुरुवत् प्रतिपूज्याः स्युः असवर्णास्तु प्रत्युत्थानाभि-वादनैः संपूज्याः ।

**व्याख्या**--[समानो वर्णः यासां ताः] सवर्णाः=सजातीयाः [ गुरोः योषितः] गुरुयोषितः=गुरुपत्न्यः गुरुणा तुल्यं गुरुवत्=गुरोर्यथा, प्रतिपूज्याः =प्रत्यर्चनीयाः (भवन्ति । असवर्णाः=असमानजतीयाः,) [ प्रत्युत्थानानि च अभिवादनानि च तैः] प्रत्युत्थानाभिवादनैः केवलं स्वागतादिभिः, संपूज्याः= संभावनीयाः ।

**अर्थ**--गुरु की पत्नियाँ यदि अपने समान जाति की हों तो गुरु के समान ही उनकी भी पूजा करनी चाहिये । पर यदि वे जाति में न्यून हों तो केवल प्रत्युत्थान एवं अभिवादन भर करना चाहिये ॥२१०॥

### अभ्यङ्गादि का निषेध--

अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ २११ ॥

अन्वय--शिष्येण गुरुपत्न्याः अभ्यञ्जनं स्नपनं गात्रोत्सादनम् एव च केशानां प्रसाधनं च न कार्याणि ।

व्याख्या--[गुरोः पत्नी तस्याः] गुरुपत्न्याः=गुरुभार्यायाः अभ्यञ्जनम्=घृततैलादिना कायकेशोपलेपनम्, स्नापनम्=स्नानक्रियायां सहयोगदानम् [गात्राणामुत्सादनं] गात्रोत्सादनं=शरीरोद्वर्तनम्, केशानां=कचानां, प्रसाधनं=विन्यासकरणं न कार्याणि=न कर्त्तव्यानि ।

अर्थ--शिष्य को गुरुपत्नी का तेल आदि से उपलेप करना, स्नान कराना अङ्गों में उबटन तथा बालों का प्रसाधन नहीं करना चाहिये ॥ २११ ॥

### पादस्पर्श का निषेध—

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥

अन्वय--गुणदोषौ विजानता पूर्णविंशतिवर्षेण शिष्येण युवतिः गुरुपत्नी तु इह पादयोः न अभिवाद्या ।

व्याख्या--[गुणश्च दोषश्च] गुणदोषौ=स्त्रीषु क्रमशः धैर्यं चापलं वा विजानता=अभिज्ञातवता, पूर्णविंशतिवर्षेण=विंशतिवर्षवयस्केन शिष्येण, युवतिः=युवावस्थापन्ना, [गुरोः पत्नी] गुरुपत्नी=गुरुभार्या, तु इह=लोके, पादयोः=चरणयोः (संस्पृश्य) न अभिवाद्या=न प्रणम्या ।

अर्थ—स्त्री के गुण तथा दोषों को जानने वाले पुरुष को चाहिये कि वह युवती गुरुपत्नी का चरण छूकर प्रणाम न करे ॥ २१२ ॥

### उक्त निषेध का कारण—

स्वभाव एष नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥

अन्वय—इह नराणां दूषणम् एषः नारीणां स्वभावः, अतः अर्थात् विपश्चितः प्रमदासु न प्रमाद्यन्ति ।

**व्याख्या**—लोके नराणां=पुरुषाणां, दूषणं=कटाक्षादिना पुरुषं प्रलोभ्य वशीकरणम्, नारीणाम्=स्त्रीणां, एषः दोषोत्पादकः स्वभावः=शीलम् अतः= अस्मात् अर्थात्=हेतोः, विपश्चितः=विद्वांसः, प्रमदासु=नारीषु, न प्रमाद्यन्ति=मोहवशीकृता न भवन्ति दूरतः ताः परिहरन्ति इत्यर्थः ।

**अर्थ**—इस संसार में पुरुषों को अपने हाव-भाव से कलङ्कित करना स्त्री जाति का स्वभाव है। इसलिये विद्वान् लोग कभी भी स्त्रियों के विषय में प्रमाद नहीं करते ॥ २१३ ॥

**अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।**
**प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४ ॥**

**अन्वय**—हि प्रमदाः कामक्रोधवशानुगं अविद्वांसम् ( किमुत ) पुनः विद्वांसम् अपि उत्पथं नेतुम् अलम् ।

**व्याख्या**—हि=यतः प्रमदाः=स्त्रियः, [ कामश्च क्रोधश्च कामक्रोधौ, ताभ्यां वशमनुगच्छतीति, तं, ] कामक्रोधवशानुगं=कामक्रोधाभ्यां वशीकृतं [ न विद्वांसम् ] अविद्वांसम्=मूर्खं वा विद्वांसम्=पण्डितजनम् अपि, उत्पथं= कुमार्गं, नेतुम्=प्रापयितुम्, अलं=समर्थाः ।

**अर्थ**—स्त्रियाँ काम-क्रोध के वश में रहने वाले मूर्खों की तो बात ही क्या ? बड़े-बड़े पण्डितों को भी कुमार्ग पर ले जाने में समर्थ हैं ॥ २१४ ॥

## एकान्तवास निषिद्ध—

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।**
**वलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५ ॥**

**अन्वय**—( जनः ) मात्रा, स्वस्रा दुहित्रा वा विविक्तासनः न भवेत् ( हि ) इन्द्रियग्रामः बलवान् ( अतः ) विद्वांसम् अपि कर्षति ।

**व्याख्या**—( जनः ) मात्रा=जनन्या, स्वस्रा=भगिन्या, दुहित्रा= कन्यया वा ( साकं ) [ विविक्तमासनं यस्य सः ] विविक्तासनः=एकान्तैकासनस्थः न भवेत्, ( यतः ) [इन्द्रियाणां ग्रामः] इन्द्रियग्रामः=इन्द्रियसमूहः [ बलमस्यास्तीति ] बलवान्=प्रबलः, ( अतः ) विद्वांसमपि=पण्डितजनम् अपि, कर्षति=आकर्षति ।

अर्थ—पण्डित को चाहिए कि माता, बहिन तथा कन्याके साथ भी एकान्त में एक आसन पर न बैठे, क्योंकि इन्द्रियसमूह अत्यन्त बलवान् होता है, वह बड़े-बड़े विद्वानों को भी अपने वश में कर लेता है ॥ २१५ ॥

## गुरुपत्नी को अभिवादन की विधि

कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ २१६ ॥

अन्वय--युवा युवतीनां गुरुपत्नीनां तु विधिवत् 'असौ अहम्' इति ब्रुवन् कामं भुवि वन्दनं कुर्यात् ।

व्याख्या--युवा=तरुणः, युवतीनां=तरुणीनां, [गुरोः पत्न्यः गुरुपत्न्यः-स्तासां] गुरुपत्नीनां==गुरुभार्याणाम्, विधिवत् शास्त्रोक्तरीत्यनुसारं, 'असौ अहम्' इति ब्रुवन्==उच्चारयन्, कामं=यथेष्टं, भुवि=पृथिव्यां, वन्दनं==प्रणामं, कुर्यात्=आचरेत्, न तु तस्याः पादस्पर्शं कुर्यादिति भावः ।

अर्थ--युवा पुरुष को उचित है कि वह गुरु की युवती स्त्रियों को शास्त्र की रीति के अनुसार 'मैं अमुक व्यक्ति हूँ' ऐसा कहता हुआ पृथ्वी में झुककर प्रणाम करे परन्तु गुरु-पत्नी का पैर न छुए ॥२१६॥

विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ २१७ ॥

अन्वय—( शिष्यः ) सतां धर्मम् अनुस्मरन् विप्रोष्य गुरुदारेषु पादग्रहणं ( कुर्वीत ) अभिवादनं च अन्वहं कुर्वीत ।

व्याख्या—(शिष्यः) सतां=सज्जनानां, धर्मम्=शिष्टाचारम्, [अनुस्मरतीति] अनुस्मरन्=विजानन्, विप्रोष्य=प्रवासादागत्य, [ गुरूणां दाराः गुरुदारास्तेषु] गुरुदारेषु=गुरुपत्नीषु [पादयोः ग्रहणं] पादग्रहणं=चरणस्पर्शं, कुर्यात् प्रतिदिनं तु केवलं दूरतः अभिवादनं=प्रणमनं, कुर्वीत=कुर्यात् ।

अर्थ--शिष्टाचार को जानने वाला शिष्य केवल विदेश से आने पर ही गुरुपत्नी के पैर को छूकर प्रणाम करे, प्रतिदिन तो दूर से ही पृथ्वी में झुककर केवल अभिवादन करे ॥२१७॥

गुरु सेवा का फल—

यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८ ॥

अन्वय—यथा नरः खनित्रेण खनन् वारि अधिगच्छति एवं शुश्रूषुः गुरुगतां विद्याम् अधिगच्छति ।

व्याख्या—यथा=येन प्रकारेण, नरः=पुरुषः, खनित्रेण=शस्त्रविशेषेण (पृथिवीं) खनन्=भूमिं विदारयन्, वारि=जलम्, अधिगच्छति=प्राप्नोति, एवं शुश्रूषुः=गुरुसेवापरः, गुरुगतां=गुरौ स्थितां, विद्यां=शास्त्रम् अधिगच्छति =प्राप्नोति ।

अर्थ—जिस प्रकार मनुष्य कुदाल से पृथ्वी को खोदता हुआ जल प्राप्त कर लेता है उसी प्रकार सेवा करनेवाला छात्र भी अपनी सेवा के बलपर गुरु में रहने वाली विद्या को प्राप्त करता है । अतः गुरु की सेवा करते रहना चाहिये ॥२१८॥

तीन प्रकार तथा ग्रामवास निषेध—

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ।
नैनं ग्रामेऽभिनिम्लोचेत्सूर्यो नाभ्युदियात्क्वचित् ॥ २१९ ॥

अन्वय—मुण्डो वा जटिलो वा अथवा शिखाजटः वा स्यात्, एनं सूर्य ग्रामे न अभिनिम्लोचेत् क्वचित् न अभ्युदियात् वा ।

व्याख्या—मुण्डः=सर्वतोभावेन कृतक्षौरः, जटिलः=जटावान्, [शिखैव जटा यस्य सः] शिखाजटः=जटाकारशिखावान् वा स्यात्=भवेत्, एनं= ब्रह्मचारिणं, सूर्यः=रविः, ग्रामे न अभिनिम्लोचेत्=नास्तं गच्छेत्, तथा ग्रामे न अभ्युदियात्=उदयो न भवेत् ।

अर्थ—ब्रह्मचारी चाहे मुड़ाये हो, वा जटा रखाये हो अथवा शिखाकी ही जटा बनाये हो, उसे ग्राम में कभी भी सूर्योदय अथवा सूर्यास्त नहीं होना चाहिये अर्थात् ब्रह्मचारी सूर्योदय के पहले गाँव में न जाय और सूर्यास्त के पश्चात् गाँव में न रहे । २१५॥

उक्त नियम भङ्गका प्रायश्चित्त—

तं चेदभ्युदियात्सूर्यः शयानं कामचारतः ।
निम्लोचेद्वाऽप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥

अन्वय--कामचारतः शयानं तं सूर्यः अभ्युदियात् अपि वा अविज्ञानात् ( शयानं तं ) सूर्यः अभिनिम्लोचेत् जपन् तद् दिनम् उपवसेत् ।

व्याख्या—कामचारतः=स्वेच्छया, शयानं=निद्राणं, तं, ब्रह्मचारिणं सूर्यः=रविः, अभ्युदियात्=उदयं गच्छेत्, अपि वा शयानं तम्, अविज्ञानात्=स्वप्नावस्थायां, ( सूर्यः ) अभिनिम्लोचेत्=अस्तं गच्छेत् चेत् (तदा) तद्दिनम्, जपन्=जपं कुर्वन्, उपवसेत्=उपवासं कुर्यात् ।

अर्थ--ब्रह्मचारी को यदि सोते हुए सूर्योदय अथवा सूर्यास्त हो जाय तो उस दिन जप करते हुए उसे उपवास करना चाहिये ॥ २२० ॥

प्रायश्चित्त न करने पर दोष—

सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः ।
प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥ २२१ ॥

अन्वय—हि यः शयानः सूर्येण अभिनिर्मुक्तः, अभ्युदितश्च, (सः) प्रायश्चित्तम् अकुर्वाणः महता एनसा युक्तः स्यात् ।

व्याख्या—हि=यतः, सः=ब्रह्मचारी, [ शेते इति ] शयानः=स्वपन्, सूर्येण=रविणा, अभिनिर्मुक्तः=परित्यक्तः, (यस्य वा शयानस्य) (सूर्यः) अभ्युदितः=उदयं प्राप्तः, सः प्रायश्चितम्=पापापनोदं, अकुर्वाणः=अविदधत्, महता, एनसा=पापेन, युक्तः=संयुक्तः स्यात्=भवेत्, नरकादिदुःखोपभोगनिमित्तमदृष्टेनोपलिप्तो भवतीत्यर्थः ।

अर्थ--जिस ब्रह्मचारी को सोते हुए ही सूर्यास्त हो जाय अथवा सूर्योदय हो जाय, वह ब्रह्मचारी यदि क्रिया के लोपनिमित्तक प्रायश्चित्त न करे तो बहुत बड़े पाप का भागी होता है ॥ २२१ ॥

सन्ध्योपासनकी अवश्यकर्तव्यता—

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपञ्जप्यमुपासीत यथाविधि ॥ २२२ ॥

अन्वय--आचम्य प्रयतः नित्यं समाहितः शुचौ देशे जप्यं जपन् उभे सन्ध्ये यथ विधि उपासीत ।

व्याख्या--आचम्य=अपः उपस्पृश्य, प्रयतः=नियमे तत्परः नित्यं, समाहितः=चित्तविक्षेपरहितः, शुचौ=शुद्धे, देशे=प्रदेशे, जप्यं=प्रणवसहितं

सावित्र्याख्यम्, जपन्=अभ्यसन्, उभे सन्ध्ये=सायं प्रातश्च, यथाविधि= शास्त्रमर्यादया, उपासीत=सवितारं पूजयेत् ।

**अर्थ**—आचमनकर ब्रह्मचारी नियमपूर्वक शुद्ध चित्त से किसी पवित्र स्थान में दोनों सन्ध्याकाल में गायत्री का जप करता हुआ भगवान् सूर्य की शास्त्रमर्यादा अनुसार उपासना करे ।। २२२ ।।

उत्तम कार्य की कर्तव्यता--

यदि स्त्री यद्यवरजः श्रेयः किञ्चित्समाचरेत् ।
तत्सर्वमाचरेद्युक्तो यत्र वाऽस्य रमेन्मनः ।। २२३ ।।

**अन्वय**—यदि स्त्री, अवरजः, वा किञ्चित् श्रेयःस माचारेत्; यत्र वा अस्य मनः रमेत्, तत् सर्वं युक्तः आचरेत् ।

**व्याख्या**—यदि स्त्री=आचार्याणी, माता आदिः, अवरजः,=कनीयान् आचार्यभृतकः शूद्रादिः वा, किञ्चित्=किमपि; श्रेष्ठं कर्म समाचरेत्= कुर्यात्, तत्सर्वं, यत्र=यस्मिन् कार्ये, वा अस्य=ब्रह्मचारिणः, मनः=चित्तं, रमेत्=प्रसीदेत, ( आत्मनस्तुष्टिरेव च-इतिधर्मलक्षणात् ) तत्सर्वं युक्तः= कल्याणाभिमुखः आचरेत्=कुर्यात् ।

**अर्थ**—स्त्री और शूद्र भी यदि किसी अच्छे कार्य को करते हों तो उसे करे, शास्त्र के अनुकूल कार्यो में जो इसे अच्छा लगे वह सावधान होकर करे ।। २२३ ।।

त्रिवर्ग का स्वरूप--

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ।। २२४ ।।

**अन्वय**--( कैश्चित् ) धर्मार्थौ श्रेयः ( उच्यते ) ( कैश्चित् ) कामार्थौ ( श्रेयः ) ( उच्यते ) ( कैश्चित् ) धर्म एव ( श्रेयः ) ( कैश्चित् ) इह अर्थ एव श्रेयः ( उच्यते ) ( मन्मते तु) त्रिवर्गः श्रेय इति स्थितिः ।

**व्याख्या**—( कैश्चिदाचार्यैः ) [ धर्मश्च अर्थश्च ] धर्मार्थौ, श्रेयः= हितकारकम्, इति (इति उच्यते) ( कैश्चित् ) [ कामश्च अर्थश्च ] कामार्थौ ( श्रेयः=हितम् ) ( उच्यते ) ( कैश्चित् ) धर्म एव ( श्रेयः उच्यते ) ( कैश्चित्) इह=लोके, अर्थ एव वा ( श्रेयः उच्यते ), मन्मते तु त्रिवर्गः= धर्मार्थकामाः श्रेयः इति, स्थितिः=सिद्धान्तः ।

अर्थ--इस संसार में कोई धर्म-अर्थ को, कोई काम और अर्थ को, कोई केवल धर्म को और कोई केवल अर्थ को ही कल्याण कारक मानते हैं पर मेरा तो सिद्धान्त है कि धर्म, अर्थ तथा काम तीनों ही कल्याण कारक हैं ॥२२४॥

आचार्यादि का अपमान न करें--

आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ।
नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ २२५ ॥

अन्वय—आचार्यः पिता माता च पूर्वजः भ्राता च आर्त्तेन अपि न अवमन्तव्याः, ब्राह्मणेन तु विशेषतः न अवमन्तव्याः ।

व्याख्या—[आचरति आचारयति वा] आचार्यः=गुरुः, पिता=जन्मदः, माता=जननी, पूर्वजः=ज्येष्ठः, भ्राता=सोदरः, आर्त्तेन=दुःखावस्थां गतेन अपि पुरुषेण=नरेण, न अवमन्तव्याः=न तिरस्करणीयाः ब्राह्मणेन=विप्रेण तु विशेषतः न अवमन्तव्याः=न तिरस्करणीयाः ।

अर्थ--दुःखी मनुष्य भी आचार्य, माता, पिता, बड़ा भाई, इनका अपमान न करे। ब्राह्मण को तो विशेष रूप से इनके अपमान से बचना चाहिये ॥२२५॥

आचार्यादि की महत्ता--

आचार्यो ब्रह्मणो मूर्तिः, पिता मूर्तिः प्रजापतेः ।
माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः ॥ २२६ ॥

अन्वय--आचार्यः ब्रह्मणो मूर्तिः, पिता प्रजापतेः मूर्तिः, माता तु पृथिव्याः मूर्त्तिः, स्वः भ्राता आत्मनः मूर्तिः ।

व्याख्या—आचार्यः=गुरुः, ब्रह्मणः=परमात्मनः, मूर्त्तिः=शरीरम्, पिता =जनकः प्रजापतेः=हिरण्यगर्भाख्यस्य, मूर्त्तिः=शरीरम्, माता तु=जननी तु, पृथिव्याः=क्षमायाः, मूर्तिः=शरीरम्, स्वः=स्वकीयः सोदरः भ्राता, आत्मनः=क्षेत्रज्ञस्य मूर्तिः=शरीरम् । अतः देवस्वरूपा एते न कदापि अनादरणीयाः ।

अर्थ—आचार्य परब्रह्म परमात्माकी, पिता सृष्टिकर्त्ता ब्रह्माकी, माता पृथ्वीकी तथा सहोदर भ्राता साक्षात् क्षेत्रज्ञ आत्मा की मूर्ति है, अतः पुरुष किसी भी अवस्था में इनका अपमान न करे, फिर ब्राह्मण की तो बात ही क्या ॥२२६॥

### माता-पिता के क्लेश का निष्क्रय नहीं--

यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ।। २२७ ।।

**अन्वय**—मातापितरौ नृणां संभवे यं क्लेशं सहेते तस्य वर्षशतैरपि निष्कृतिः कर्तुं न शक्या ।

**व्याख्या**—[ माता च पिता च ] मातापितरौ=जननीजनकौ, नृणां=अपत्यानां, संभवे=गर्भधारणप्रभृति ( गर्भधारणं प्रसवादि मातुः क्लेशः, अपत्यस्य संवर्धनं, संस्कारशिक्षणादि पितुः क्लेशः ) यं क्लेशं=दुःखं, सहेते=अनुभूयेते, तस्य=क्लेशस्य, निष्कृतिः=आनृण्यं, [ वर्षाणां शतानि वर्षशतानि तैः ] वर्षशतैः=बहुजन्मभिः, कुतः पुनरसंख्यधनदानादिभिः कर्त्तुं=विधातुम् न शक्या=न योग्या ।

**अर्थ**—माता पिता बालक के गर्भधारण से लेकर समर्थ होने पर्यन्त जितना क्लेश उठाते हैं उसका बदला सैकड़ों जन्मों से भी नहीं चुकाया जा सकता, फिर असंख्य धनदानादिकी बात तो दूर ही है ।।२२७।।

### सर्वोत्कृष्ट तपस्या

तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ।। २२८ ।।

**अन्वय**--तयोः नित्यम् आचार्यस्य च सर्वदा प्रियं कुर्यात्, तेषु एव त्रिषु तुष्टेषु सर्वं तपः समाप्यते ।

**व्याख्या**--तयोः=मातापित्रोः, नित्यम् आचार्यस्य=गुरोः च, सर्वदा=यावज्जीवं प्रियं=हितं, कुर्यात्=विदधीत न तु केवलं द्विस्त्रिर्वा प्रियं कुर्यादित्यर्थः । तेषु आचार्यादिषु एव तुष्टेषु=भक्त्याराधितेषु वा, सर्वं तपः=सर्वतपःफलं, समाप्यते=पर्यवसितुमर्हति, बहुवर्षगणान् तपस्यता यत्फलं लभ्यते तत्सर्वमेषां भक्त्याराधनेनानायासं लभ्यते इत्यर्थः ।

**अर्थ**--अतः मनुष्य माता-पिता तथा आचार्य का नित्य ही प्रिय करे। उनके प्रसन्न होने पर पुरुष को अनायास ही समस्त तप के फलों की प्राप्ति हो जाती है ।।२२८।।

### तपस्या की पूर्णता--

तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।
नैतैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥ २२९ ॥

**अन्वय**—तेषां त्रयाणां शुश्रूषा परमं तपः उच्यते, तैः अभ्यननुज्ञातः अन्यं धर्मं न समाचरेत् !

**व्याख्या**--तेषां=पूर्वोक्तानां त्रयाणां=मातापित्राचार्याणाम्, शुश्रूषा=सेवा, परमम्=उत्कृष्टं, तपः=तपस्या, उच्यते=कथ्यते, तैः=मात्रादिभिः अभ्यननुज्ञातः=अनाज्ञप्तः ( माणवकः ), अन्यम् धर्मम्=तीर्थस्नानव्रतोपवासादिकं न समाचरेत्=न कुर्यात् ( नित्यकर्मानुष्ठाने अनुज्ञा नोपकारिणी )

**अर्थ**—मनुष्य के लिये माता पिता तथा आचार्य की सेवा सबसे बड़ी तपस्या है अतः इन लोगों की आज्ञा के बिना कोई भी तीर्थ, व्रत, उपवास, यज्ञयागादि न करे ॥ २२९ ॥

### तीनों की महत्ता

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

**अन्वय**—हि ते एव त्रयो लोका; ते एव त्रयः आश्रमाः हि ते एव त्रयो वेदाः ते एव त्रयः अग्नयः उक्ताः।

**व्याख्या**--हि=यस्मात्, ते एव=मात्रादयः एव, त्रयः लोकाः=भूर्भुवः-स्वर्लोकाः, ते एव त्रयः आश्रमाः=ब्रह्मचर्यगृहस्थवानप्रस्थरूपाः, हि=यतः, ते एव त्रयो वेदाः=ऋग्वेद-यजुर्वेद-सामवेदरूपाः, ते एव त्रयः अग्नयः=गार्हपत्य-दक्षिणा-हवनीयरूपाः सन्ति। उक्ताः=कथिताः।

**अर्थ**--क्योंकि ( माता, पिता तथा आचार्य ) ये तीनों ही तीनों लोक, तीनों आश्रम, तीनों वेद तथा तीनों अग्नि कहे गये हैं। इसलिये इनकी सेवा से तीनों लोकों की प्राप्ति, तीनों आश्रमों का फल, तीनों वेदों के स्वाध्याय का फल तथा तीनों अग्नियों की परिचर्या का फल प्राप्त होता है ॥ २३० ॥

पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥

अन्वय--पिता वै गार्हपत्यः अग्निः, माता दक्षिणः अग्निः स्मृतः, गुरुः तु आहवनीयः स्मृतः, सा अग्नित्रेता गरीयसी ।

व्याख्या—पिता=जनकः वै=एव, [ गृहपतेरयं ] गार्हपत्यः=तन्नामकः अग्निः, माता=जननी, दक्षिणः=तन्नामकः अग्निः स्मृतः=कथितः, गुरुः आचार्यः, तु आहवनीयः अग्निः स्मृतः, सा [ त्राणार्थमिता त्रेता, त्रेता चासौ अग्निः ] अग्नित्रेता=त्राणार्थमतिप्राप्ता, गरीयसी=महाफला ।

अर्थ--पिता गार्हपत्य अग्नि, माता दक्षिण अग्नि तथा आचार्य आहवनीय अग्नि है और ये तीनों ही अग्नियाँ मनुष्य का इस लोक तथा परलोक से संत्राण करने के कारण महाफलदायक हैं ॥ २३१ ॥

तीनों की सेवा का फल--

त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकान्विजयेद् गृही ।
दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥

अन्वय--गृही एतेषु त्रिषु अप्रमाद्यन् त्रीन् लोकान् विजयेत्, स्ववपुषा दीप्यमानः दिवि देववत् मोदते ।

व्याख्या—[गृहमस्यास्तीति] गृही=गृहस्थः, एतेषु=पूर्वोक्तेषु, त्रिषु=आचार्यादिषु, [ न प्रमाद्यन् ] अप्रमाद्यन्=अस्खलन्, त्रीन्-लोकान्=भुर्भुवः-स्वरादीन् विजयेत्=विजयं प्राप्नुयात् [ स्वस्य वपुः स्ववपुः तेन ] स्ववपुषा=स्वशरीरेण दीप्यमानः=स्वतेजसा शोभमानः, [ देवेन तुल्यं] देववत्=देवसदृशः दिवि=स्वर्गे, मोदते=मोदं प्राप्नोति ।

अर्थ—गृहस्थ इन तीनों की सेवा में सर्वदा सावधान होने से तीनों लोकों को जीत लेता है और तेजस्वी होकर देवता के समान स्वर्ग में प्रसन्न रहता है ॥ २३२ ॥

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥ २३३ ॥

अन्वय--मातृभक्त्या इमं लोकं, पितृभक्त्या तु मध्यमं लोकं, एवं गुरुशुश्रूषया ब्रह्मलोकं समश्नुते ।

व्याख्या--[ मातरि भक्तिः मातृभक्तिस्तया ] मातृभक्त्या=जननीसेवया, इमं लोकं मृत्युलोकम्, मातुः भारसहत्वेन पृथिवीसदृशत्वात्, [ पितरि भक्त्या ]

पितृभक्त्या=पितृ-शुश्रूषया, मध्यमलोकं=अन्तरिक्षलोकं, पितुर्हि प्रजापतिसदृशत्वात्, प्रजापतीनामन्तरिक्षलोकाच्च एवं [ गुरोः शुश्रूषा, तया ] गुरुशुश्रूषया, गुरुसेवया [ ब्रह्मणः लोकं ] ब्रह्मलोकम्=आदित्यलोकं, आदित्यस्य ब्रह्मस्वरूपत्वात्, समश्नुते=प्राप्नोति ।

अर्थ—मनुष्य माता में भक्ति रखने से इस लोक को, पिता में भक्ति रखने से अन्तरिक्ष लोक को तथा गुरु में श्रद्धा रखने से आदित्य लोक को प्राप्त कर लेता है ॥२३३॥

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २३४ ॥

अन्वय--यस्य एते त्रयः आदृताः तस्य सर्वे धर्माः आदृताः, यस्य एते अनादृताः तस्य सर्वाः क्रियाः अफलाः ।

व्याख्या—यस्य=पुरुषस्य, एते त्रयः=मातापित्राचार्याः आदृताः=शुश्रूषया परितुष्टाः, तस्य=पुरुषस्य, सर्वे, धर्माः=अहिंसासत्यास्तेयादयः, आदृताः=फलदायिनः, यस्य, एते अनादृताः=असंतुष्टाः तस्य सर्वाः क्रियाः=श्रौतस्मार्त्तादीनि कर्माणि अफलाः=निष्फलाः ज्ञेयाः ।

अर्थ--जिसने इन तीनों का आदर किया उसके किये गये सभी धर्म फलदायक होते हैं, परन्तु जिसने इनका अनादर किया उसके सभी श्रौतस्मार्त्त आदि कर्म निष्फल हैं ॥२३४॥

तीनों की सेवा का माहात्म्य--

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ २३५ ॥

अन्वय—यावत् (एते) त्रयः जीवेयुः तावत् अन्यं न समाचरेत्, प्रियहिते रतः तेषु नित्यं शुश्रूषां कुर्यात् ।

व्याख्या—यावत्=यावत्कालपर्यन्तम्, एते=मातापित्राचार्याः, जीवेयुः=प्राणान् धारयेयुः, तावत्=तद्दिनपर्यन्तं ( तदनुज्ञां विना ) अन्यं=तीर्थस्नानव्रतोपवासादिरूपं, (धर्मं) न समाचरेत्=न कुर्यादेव [ प्रियं च हितं तस्मिन्] प्रियहिते=प्रियत्वकरणे पालने च रतः=संयुक्तः, तेषु=मातापित्राचार्येषु, नित्यं=प्रतिदिनं, शुश्रूषां=सेवां, कुर्यात्=विदधीत ।

अर्थ—मनुष्य माता, पिता तथा आचार्य के जीवित रहते उनकी आज्ञा के बिना कोई भी तीर्थ स्नान व्रतादिरूप धर्म न करे। उनका प्रिय करता हुआ और पालन करता हुआ उनकी सेवा में लगा रहे ॥२३५॥

तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः॥ २३६॥

अन्वय—तेषाम् अनुपरोधेन मनोवचनकर्मभिः यत्,यत् पारत्र्यम् आचरेत तत् तत् तेभ्यः निवेदयेत्।

व्याख्या—तेषां = मातापित्राचार्याणाम्, [ न उपरोधः अनुपरोधस्तेन ] अनुपरोधेन=सेवनानुकूल्येन, मनश्च वचनं च कर्म च मनोवचनकर्माणि तैः मनोवचनकर्मभिः=चित्तवाक्व्यापारैः यत् [ परत्र भावः ] पारत्र्यं=परलोकोपभोग्यं आचरेत् कुर्यात्, तत् तत् तेभ्यः=मातापित्राचार्येभ्यः, निवेदयेत्=समर्पयेत्।

अर्थ—मनुष्य माता, पिता तथा आचार्य की अनुज्ञा से मन वाणी तथा कार्य द्वारा जो भी पारलौकिक काम करे उसे उन्हीं के निमित्त अर्पण कर देवे ॥२३६॥

त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते॥ २३७॥

अन्वय—हि एतेषु त्रिषु पुरुषस्य इतिकृत्यं समाप्यते, एषः साक्षात् परः धर्मः अन्यः उपधर्मः उच्यते।

व्याख्या—हि=यतः, एतेषु=मातापित्राचार्येषु, पुरुषस्य=जनस्य, इतिकृत्यम्=कर्त्तव्यकात्स्न्र्यं, समाप्यते=परिपूर्णोऽनुष्ठितो भवति। एषः=मातापित्राचार्यसेवारूपः, साक्षात् परः=श्रेष्ठः, धर्मः=वेदविहितः, अन्यः=अग्निहोत्रादिरूपः, उपधर्मः=गौणधर्मः उच्यते=कथ्यते।

अर्थ—इन तीनों की सेवा करने से ही पुरुष को सम्पूर्ण धर्मों के फल की प्राप्ति हो जाती है। इसके अतिरिक्त अन्य सभी अग्निहोत्रादिरूप धर्म गौणधर्म कहे गये हैं ॥२३७॥

विद्या की ग्राह्यता—

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि॥ २३८॥

**अन्वय**—श्रद्धधानः शुभां विद्याम् अवरात् अपि आददीत, अन्त्यात्, अपि परं धर्मम् दुष्कुलात् अपि स्त्रीरत्नम् ( आददीत )।

**व्याख्या**—[ श्रद्दधते इति ] श्रद्दधानः=आस्तिकः, शुभां=शोभनां, विद्यां=काव्याधाररूपां अवरात्=हीनजातीयात् अपि, आददीत=शिक्षेत्, न तु वेदान्तविद्याम्, तस्य अनापदि निषेधात् (किञ्च), अन्त्यात्-चाण्डालात्, अपि परं=अन्यं लौकिकं, धर्मम्=व्यवहारादिकम् आददीत=शिक्षेत् । परं धर्मं ब्रह्मज्ञानादिरूपमिति तु नार्थः तस्य चाण्डालादेः परिज्ञानासंभवात् । [ दुष्टं कुलं दुष्कुलं तस्मात् ] दुष्कुलात्=हीनक्रियात्, [ स्त्री रत्नमिव इति ] स्त्रीरत्नम्=भार्यारत्नम्, आददीत=गृह्णीत ।

**अर्थ**—आस्तिक मनुष्य अपने से नीचे व्यक्ति से भी शोभन काव्यादि विद्या, चाण्डालादि से भी लौकिक धर्म तथा दुष्ट कुल से भी स्त्री-रत्न को ग्रहण करे ॥ २३८ ॥

अमृत आदि की ग्राह्यता—

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २३९ ॥

**अन्वय**—विषाद् अपि अमृतं ग्राह्यम्, बालाद् अपि सुभाषितं ( ग्राह्यम् ), अमित्राद् अपि सद्वृत्तं ( ग्राह्यं ), अमेध्याद् अपि काञ्चनं ग्राह्यम् ।

**व्याख्या**—( नरैः विषाद्=गरलात्, अपि अमृतं ग्राह्यम्, बालाद्=शिशोः, अपि सुभाषितम्=हितकारि वचनं ग्राह्यम्, [ न मित्रमित्यमित्रं तस्मात् । अमित्रात् शत्रोरपि, [सतां वृत्तं ] सद्वृत्तं=शिष्टाचारः, ( ग्राह्यः ) शत्रोराचरितमिति न द्वेष्यमित्यर्थः [न मेध्यममेध्यं तस्मात्] अमेध्यात्=अपवित्रादपि स्थानात्, काञ्चनं=सुवर्णं, ग्राह्यम्=ग्रहणीयं यथा असदाश्रया अप्येते ग्रहीतव्या भवन्ति तथा अब्राह्मणादपि अध्ययनं न दूष्यम् ।

**अर्थ**—जिस प्रकार अच्छे पुरुष विष से अमृत, बालक से भी सुभाषित, शत्रु से भी सदाचार तथा अपवित्र स्थान से भी सुवर्ण ग्रहण कर लेते हैं उसी प्रकार नीचाश्रया भी विद्या ब्राह्मणेतर से ग्राह्य ही है ॥ २३९ ॥

स्त्री आदि की ग्राह्यता—

स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम् ।
विविधानि च शिल्पानि समादेयानि सर्वतः ॥ २४० ॥

अन्वय—स्त्रियः रत्नानि अथो विद्या धर्मः शौचं सुभाषितं विविधानि शिल्पानि च सर्वतः समादेयानि।

व्याख्या--स्त्रियः=नार्यः, रत्नानि=मणयः, अथो, विद्या, शौचं=शुद्धत्वम्, सुभाषितम्=माङ्गलिकोक्तयः, विविधानि=अनेकप्रकाराणि, शिल्पानि=चित्रलेखनतूलिकयारञ्जनादीनि च, सर्वतः=जातिविशेषमनपेक्ष्य सर्वस्माद् अपि, समादेयानि=स्वीकर्त्तव्यानि।

अर्थ--स्त्रियाँ, रत्न, विद्या, धर्म, पवित्रता, सुभाषित तथा अनेक प्रकार की कारीगरी जाति-विशेष की अपेक्षा न कर हीन जाति से भी ग्रहण कर लेनी चाहिये ॥ २४० ॥

ब्राह्मणेतर से भी विद्याध्ययन--

अब्राह्मणादध्ययनमापत्काले विधीयते।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ २४१ ॥

अन्वय—आपत्काले अब्राह्मणात् अध्ययनं विधीयते, अनुव्रज्या गुरोः शुश्रूषा च यावद् अध्ययनं ( कार्या )।

व्याख्या--[ आपदः कालः आपत्कालस्तस्मिन् ] आपत्काले ब्राह्मणाध्यापकाभावे [ न ब्राह्मणोऽब्राह्मणस्तस्माद् ] अब्राह्मणात्=क्षत्रियाद् वैश्याद्वा ( न तु शूद्रात्, तस्याध्यापनेऽधिकाराभावात् ) [ अधीते इति ] अध्ययनं=विद्याग्रहणं, विधीयते=कर्त्तव्यतया उपदिश्यते, [ अनुव्रजितुं योग्या ] अनुव्रज्या=अनुगमनादि-रूपा, गुरोः=आचार्यस्य शुश्रूषा=सेवा तु, यावदध्ययनम्-अध्ययनकालपर्यन्तं कर्त्तव्या। ब्राह्मणगुरोरभावे अब्राह्मणाचार्यस्य केवलमनुगमनमात्रं शुश्रूषणं अध्ययनकालपर्यन्तं कर्त्तव्यं न तु तस्य पादवन्दनं, पादप्रक्षालनं वा कर्त्तव्यम् अनुव्रज्यामात्रशुश्रूषेत्युक्तैः।

अर्थ—यदि ब्राह्मणगुरु न मिलें तो आपत्तिकाल में ब्राह्मणेतर ( क्षत्रिय-वैश्य ) से विद्या का ग्रहण कर लेना चाहिये। किन्तु उनका चरणस्पर्श, पादप्रक्षालनादि सेवा न कर केवल उनका अनुगमन मात्र करना चाहिये। वह भी सदा नहीं केवल अध्ययन काल तक ही ॥ २४१ ॥

आत्यन्तिकवासका निषेध--

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम् ॥ २४२ ॥

अन्वय--शिष्यः अनुत्तमां गतिं काङ्क्षन् अब्राह्मणे, अननूचाने ब्राह्मणे च आत्यन्तिकं वासं न वसेत् ।

व्याख्या--[शास्तुं योग्यः] शिष्यः=अध्ययनशीलः, [न उत्तमः यस्याः सा ताम्] अनुत्तमां=सर्वश्रेष्ठाम्, गतिम्=मोक्षरूपाम्, काङ्क्षन्=वाञ्छन्, [न ब्राह्मणोऽब्राह्मणस्तस्मिन् अब्राह्मणे=क्षत्रियादौ, [न अनूचानः अननूचानस्तस्मिन्] अननूचाने=वृत्ताभिजनहीने व्याख्यानाध्ययनशीलरहिते वा, ब्राह्मणे=विप्रे च, आत्यन्तिकं-यावज्जीवं, वासं=निवासं, न वसेत्=न कुर्यात् ।

अर्थ—उत्तम गति चाहनेवाले शिष्य को जो गुरु ब्राह्मण न हो अथवा कुल सदाचार तथा अध्ययन से रहित ब्राह्मण गुरु के यहाँ भी ब्रह्मचर्य अग्निशुश्रूषादि के लिये जीवनपर्यन्त निवास नहीं करना चाहिये ॥२४२॥

आत्यन्तिक वास में गुरु-सेवा—

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात् ॥ २४३ ॥

अन्वय—यदि तु गुरोः कुले आत्यन्तिकं वासं रोचयेत (तदा) आशरीरविमोक्षणात् युक्तः एनं परिचरेत् ।

व्याख्या—यदि चेत्, गुरोः=आचार्यस्य, कुले=वंशे आत्यन्तिकं यावज्जीवं नैष्ठिकब्रह्मचर्य-पालनार्थम् अग्निशुश्रूषणार्थं वा वासं=निवासं, रोचयेत=अभिकाङ्क्षेत् (तदा) [शरीरस्य विमोक्षणमिति शरीरविमोक्षणं तमभिव्याप्येति] आशरीरविमोक्षणात्=देहत्यागावधि, युक्तः=तत्परः सन्, एनं=आचार्यं, परिचरेत्=शुश्रूषेत ।

अर्थ—यदि गुरु के घर में ही सदा वास करने की इच्छा हो तो मरण पर्यन्त गुरु की सेवा करता रहे ॥२४३॥

ब्रह्मलोककी प्राप्ति--

आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ २४४ ॥

अन्वय—यः तु शरीरस्य आ समाप्तेः गुरुं शुश्रूषते सः विप्रः ब्रह्मणः शाश्वतं सद्म अञ्जसा गच्छति ।

व्याख्या—यः=नैष्ठिक ब्रह्मचारी, शरीरस्य=देहस्य, समाप्तेः=त्यागात्, आ=तावत्कालपर्यन्तं, गुरुं=स्वाचार्यं, शुश्रूषते-परिचरति, सः विप्रः=ब्राह्मणवटुः, ब्रह्मणः=परमात्मनः शाश्वतं=अपरिवर्त्तमानं, सद्म=स्थानं; अञ्जसा=अनायासेन गच्छति=प्राप्नोति, न तिर्यङ्मनुष्यप्रेतादिजन्मसु तस्यावर्त्तनं भवतीति भावः।

अर्थ--जो नैष्ठिक ब्रह्मचारी शरीरत्यागपर्यन्त गुरु की निरन्तर सेवा करता है, वह परमात्मा के उस धाम को प्राप्त करता है जहाँ से फिर उसे संसार में नहीं आना पड़ता ॥२४४॥

गुरुदक्षिणाका विधान--

न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ २४५ ॥

अन्वय—धर्मवित् (वटुः) पूर्वं गुरवे न किञ्चिद् उपकुर्वीत, स्नास्यन् तु गुरुणा आज्ञप्तः शक्त्या गुर्वर्थम् आहरेत्।

व्याख्या—[ धर्मं वेत्तीति ] धर्मवित्=धर्मज्ञः, पूर्वं=स्नानात् पूर्वं, किञ्चिदपि=गोहिरण्यादिकम् वा, न उपकुर्वीत=न दद्यात्, गृहस्थाश्रमे प्रवेष्टुकामः [स्नास्यतीति] स्नास्यन् स्नानमाचरिष्यन्, तु गुरुणा=आचार्येण, आज्ञप्तः=आदिष्टः, शक्त्या=शक्त्यनुसारं, [ गुरोः अर्थम्] गुर्वर्थम्=आचार्यार्थम्, आहरेत्=आनयेत्।

अर्थ—धर्म को जानने वाला ब्रह्मचारी सेवा के अतिरिक्त पहले गुरु को (दक्षिणा के रूप में) कुछ न दे, किन्तु समावर्तन के लिये गुरु की आज्ञा पाकर गुरु को यथाशक्ति गुरुदक्षिणा प्रदान करे ।।२४५।।

गुरु दक्षिणा में देय पदार्थ—

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।
धान्यं शाकं च वासांसि गुरवे प्रीतिमावहेत् ॥ २४६ ॥

अन्वय--गुरवे क्षेत्रं हिरण्यं गाम् अश्वं छत्रोपानहम् आसनं धान्यं शाकं वासांसि च (दत्वा) प्रीतिम् आवहेत्।

व्याख्या--गुरवे=आचार्याय, क्षेत्रं=धान्योत्पत्तियोग्यभूमिं, हिरण्यं=सुवर्णम्, गां=धेनुं, अश्वं=घोटकं, [छत्रं चोपानच्च इत्यनयोः समाहारः]

छत्रोपानहम् आसनं=कुशोर्णादिनिर्मितम्, धान्यं=व्रीहिम्, शाकं=भोजनोपकरणं व्यञ्जनादिकं, वासांसि=वस्त्राणि (दत्त्वा), प्रीतिम्=प्रसन्नताम्, आवहेत्=उत्पादयेत् ।

अर्थ—ब्रह्मचारी को ब्रह्मचर्य समाप्त कर गृहस्थाश्रम में प्रवेश करने के लिये दीक्षान्त में भूमि, सुवर्ण, गौ, घोड़ा, छाता, जूता, वासन, अन्न, शाक और वस्त्र आदि आचार्य को देकर प्रसन्न करना चाहिये ॥ २४६ ॥

गुरुपुत्रादि भी गुरुवत्--

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद् वृत्तिमाचरेत् ॥ २४७ ॥

अन्वय—(नैष्ठिक ब्रह्मचारी) आचार्ये तु प्रेते खलु गुणान्विते गुरुपुत्रे गुरुदारे सपिण्डे वा गुरुवद् वृत्तिम् आचरेत् ।

व्याख्या--नैष्ठिकब्रह्मचारी आचार्ये=गुरौ, तु प्रेते=मृते, खलु, अविद्यमाने वा [गुणैरन्विते] गुणान्विते=श्रोत्रियादिगुणयुक्ते [गुरोः पुत्रे] गुरुपुत्रे=गुरुसुते, (तदभावे) [गुरोः दारः गुरुदारस्तस्मिन्] गुरुदारे=गुरुपत्न्यामाचार्याण्याम् (अत्र दारशब्दस्यैकवचनं स्मृतिकाराणां मतेन), (तदभावे) सपिण्डे=गुरुसप्तपुरुषान्विते वंशे पितृव्यादौ, वा [गुरुणा तुल्यं] गुरुवत्=भैक्षनिवेदनादिकं वृत्तिम्=व्यवहारं, आचरेत् कुर्यात् ।

अर्थ—नैष्ठिक ब्रह्मचारी को गुरु के न रहने पर उनके गुणवान् पुत्र में, उसके भी न रहने पर गुरु के सपिण्ड (गुरु के) चाचा आदि में गुरु के समान ही व्यवहार करना चाहिये ॥ २४७ ॥

अभाव में कर्तव्य--

एतेष्वविद्यमानेषु स्नानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४८ ॥

अन्वय—(नैष्ठिकः ब्रह्मचारी) एतेषु अविद्यमानेषु स्नानासनविहारवान् अग्निशुश्रूषां प्रयुञ्जानः आत्मनः देहं साधयेत् ।

व्याख्या--(नैष्ठिकः ब्रह्मचारी) एतेषु=पूर्वोक्तेषु गुर्वादिषु, अविद्यमानेषु=तेषामभावे इत्यर्थः, [स्थानासने एव विहारस्तद्वान्] स्थानासनविहारवान्=

आचार्यस्थानासने भ्रमणशीलः, अग्नेः शुश्रूषां = अग्निपरिचर्यां, प्रयुञ्जानः = कुर्वन्, आत्मनः = स्वस्य, देहं = शरीरं, साधयेत् = अर्पयेत् ।

**अर्थ**--इन सभी के न रहनेपर नैष्ठिक ब्रह्मचारी गुरु के स्थान और आसन के समीप ही आनन्दपूर्वक रहता हुआ अग्नि की सेवा करता रहे और तपस्या करता हुआ अपने शरीर को सिद्ध करे ॥ २४८ ॥

आजीवन गुरुसेवाका फल--

एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमस्थानं न चेहाजायते पुनः ॥ २४९ ॥



इति श्रीमानवे धर्मशास्त्रे भृगुप्रोक्तायां मनुस्मृतौ
द्वितीयोऽध्यायः समाप्तः ॥

**अन्वय**--यः विप्रः अविप्लुतः एवं ब्रह्मचर्यं चरति स उत्तमस्थानं गच्छति इह च पुनः न जायते ।

**व्याख्या**--यः विप्रः = ब्राह्मणः, [ न विप्लुतः ] अविप्लुतः = सावधानः, एवं = उपर्युक्तप्रकारेण, ब्रह्मचर्यं = नैष्ठिकब्रह्मचर्यं, चरति = पालयति, सः = ब्रह्मचारी [ उत्तमं च यत् स्थानम् ] उत्तमस्थानं = ब्रह्मलोकं, गच्छति = प्राप्नोति इह = अस्मिन् संसारे च पुनः द्वितीयवारं न जायते = नोत्पद्यते ।

**अर्थ**--जो ब्राह्मण सदैव सावधानी से इस प्रकार नैष्ठिक ब्रह्मचर्य का नियम से पालन करता है वह उस उत्तम ब्रह्मलोक को प्राप्त करता है जहाँ इस संसार में नहीं लौटता ॥ २४९ ॥

मानवे धर्मशास्त्रेऽस्मिन् द्वितीयोऽध्यायसंज्ञितः ।
श्रीविश्वेशकृपालेशात् सव्याख्यः पूर्णतामगात् ॥

